श्रीयुत पण्डित चारुदेव जी शास्त्री।



* ओ३म् *

# योगसूत्रवैदिकवृत्तिः

श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामि-
हरिप्रसादवैदिकमुनिविरचिता ।



तीयवार १००० | सं० १९७३ | मूल्यं १२ आणकाः



# योगसूत्रवैदिकवृत्तिः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम-
भगवत्पादशिष्येण
श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यपण्डितस्वामि-
ज्वाहिरदासभगवत्पादाधिगतवेदवेदाङ्गविद्येन

## श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामि-
## हरिप्रसादवैदिकमुनिना विरचिता

हरिद्वारवास्तव्येन तेनैव च

इन्द्रप्रस्थे
सद्धर्म्मप्रचारकयन्त्रालये मुद्रापयित्वा प्रकाशिता ।

शाकः १८३८, संवत् १९७३ ] [ मूल्यं १२ आणकाः

॥ ओ३म् ॥

# योगसूत्रवैदिकवृत्ति-भूमिका ।

यस्य कृपाकटाक्षेण योगः पुंसां प्रजायते ।
वेदिवंशावतंसं तं योगिनं समुपास्महे ॥१॥

योगो नाम प्राप्तिः । यां किलाध्यात्मविदोऽनुभवः, लौकिकाश्च साक्षात्सम्बन्ध इत्याचक्षते । स च यथास्थानं प्रकृतिपुरुषेश्वराणामुपजायमानोऽभ्युदयाय मोक्षाय चावकल्पत इति ध्रुवो नियमः । नहि येन याथातथ्यतः प्रकृतितत्त्वमनुभूयते तेनाभ्युदयो न लभ्यते, पुरुषेश्वरं चानुभवता मोक्षो नावाप्यते । तस्य चैतस्यानुभवलक्षणस्य योगस्योपायः खलु समाधिरिति सर्वतन्त्रसिद्धान्तः । असमाहितस्य कालत्रयेऽपि वस्तुयाथात्म्यानुभवानुत्पत्तेः । नहि यस्य चित्तं न जातु समाधीयते तेन स्थूलात् स्थूलमपि

किञ्चिद्वस्तु याथात्म्येनानुभवितुं पार्य्यते, विचिन्तरघनेयं सूक्ष्मा प्रकृतिः, ततश्च सूक्ष्मतरः पुरुषः, ततोऽपि सूक्ष्मतमो जगतां पतिरीश्वर इति तु किमु वक्तव्यम् । एतदर्थमेव च श्रुत्या मुमुक्षूणामात्मानुबुभूषाणां विशेषणं समाहित इत्युपादीयते "समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" (बृ० ४ । ४ । २३ ) इति । समाधिश्च चित्तस्यावस्थाविशेषो यत्रास्य सर्वाः प्रमाणप्रभृतयो वृत्तयो निरुध्यन्ते । स एव च नूनमिह योगानां समाधिकर्मणो युजेर्व्युत्पन्नेन योगशब्देन परिभाष्यते । यत्रैतद्वक्ष्यति स्वयं भगवान् सूत्रकारः " योगश्चित्तवृत्तिनिरोधः " ( यो० १ । १ ) इति । सोऽयं योगः सम्प्रज्ञातासम्प्रज्ञातभेदेन द्विविधः । तत्र प्रकृतिपुरुषानुभवोपायः सम्प्रज्ञातः, ईश्वरानुभवोपायश्चासम्प्रज्ञातः । यत्रैतच्छ्रुतं भवति "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ १० ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ" (कठ० ६ । १०–११) इति । अत्र प्रथमेन श्लोकेनासम्प्रज्ञातः श्राव्यते, द्वितीयेन च सम्प्रज्ञातः । मन इति चित्तसामान्यमुच्यते, बुद्धिरिति च विशिष्टमुपनिषत्सु सर्वत्रेति दृढमवधेयम् । यदा=यस्यामव-

स्थायां पञ्च=पञ्चसंख्याकानि ज्ञानानि=ज्ञानेन्द्रियाणि घ्राणादीनि प्रत्याह्रियमाणानि मनसा=चित्तेन सार्धमवतिष्ठन्ते=सर्वतो व्यापारशून्यानि वर्तन्ते, बुद्धिश्च=निर्विचारवैशारद्येन जायमानप्रत्यगात्मगोचरान्यताख्यातिलक्षणप्रज्ञावच्चित्तं च न विचेष्टते=ज्ञानप्रसादेन परवैराग्येण निरुद्धप्रज्ञत्वान्नकिञ्चिद्व्यापारमारभते, कृतकृत्यत्वात्सुखं निर्व्यापारं शेते, निस्तरङ्गमहोदधिकल्पमास्ते, ताम्=तामिमामवस्थामाहुः=प्राहुरौपनिषदाः परमां गतिम्=यदूर्ध्वं योगस्य गतिर्न भवति तामुत्कृष्टां चरमां काष्ठामसम्प्रज्ञातसमाधिमिति यावत्। यत्रैतद्भाषितं भवति "यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं निवर्तते" ( यो० भा० १ । ५१ ) इति। वक्ष्यति च "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" ( यो० १ । ५१ ) इति। असम्प्रज्ञातः श्रावितः, अथ सम्प्रज्ञातं श्रावयति—तामिति। चार्थोऽत्रेतिकारः, चित्तस्य तां पुनरवस्थां योगं=सम्प्रज्ञातयोगं मन्यन्ते=बुध्यन्ते योगिनो, यस्यामवस्थायामिन्द्रियाणि सर्वाणि प्रत्याह्रियमाणानि भवन्ति स्थिरं ध्रियन्ते। व्यापाराभावः स्थैर्यम्। पुरुषस्तदानीं दीर्घकालेन नैरन्तर्येण सत्कारेण चासेव्यमानो नूनमयं परमां गतिमासादयत इति बुध्यमानोऽप्रमत्तः=

योगाभ्यासे प्रमादशून्यो निरन्तरसँल्लग्नचित्तो भवति = जायते । योगो हि = योगश्चैष प्रभवाप्ययौ = प्रभवश्चित्तस्यैकाग्रतायाः, सर्वार्थतायाश्चाप्यय इति समाख्यायते । यत्रैतत्सूत्रितं भवति "सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः"(यो० ३ । ११) इति । क्षयः= अप्ययः । उदयः = प्रभवः । समाधिः = सम्प्रज्ञात इति सूत्रपदार्थः । सोऽयं द्विविधो योगो बीजरूपेण भगवति वेदेऽपि समाम्नायमानो दृश्यते "युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः" (ऋ० ५ । ८१ । १) इति । युञ्जते मन इति सम्प्रज्ञातः समाम्नायते, युञ्जते धिय इत्यसम्प्रज्ञातः । विप्रा इति मेधावन्तो योगिन उच्यन्ते । विप्रस्य बृहतो विपश्चित इति च कर्मणि षष्ठी । तत्र समाधिविषयो जगज्जन्मादिहेतुरीश्वरो लक्षणतः प्रतिपाद्यते । स हि मेधाविनां मेधावी, स्वरूपतो गुणतश्च सर्वेभ्यो बृहन्, सर्वज्ञत्वाच्च विपश्चिदिति मन्त्रपदार्थः । तमिमं द्विविधं योगं किल सर्वतः पूर्वमृषिर्हिरण्यगर्भः सूत्रैरनुशशास । तद्यथाऽऽह योगियाज्ञवल्क्यः "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति । तानि चेमानि योगस्य हैरण्यगर्भसूत्राणि नाधुना क्वचिदुपलभ्यन्ते । सूत्रात्मकस्य चास्य पातञ्जलदर्शनस्य मूलभूतानि तानीति सम्प्रदायविदो व्या-

यन्ते । तदिदं वयमप्यनुमन्यामहे । यत्कारणं स्वयं भगवान् सूत्रकारः "अथ योगानुशासनम्" (यो० १।१) इति सूत्रेऽनुशासनपदमुपादत्ते । अनुशासनञ्च शिष्टस्य शासनं प्रसिद्धम् । व्याख्यातं च तत्तथैव वाचस्पतिमिश्रैः "शिष्टस्य शासनमनुशासनमित्यर्थः" इति । तदेतद्धै-रण्यगर्भशासनमूलकं भगवता पतञ्जलिमुनिना विरचितं योगानुशासनं नाम योगदर्शनं बहुसरसं प्रसादगुणा-न्वितं योगाभिलाषुकाणां मतिमतां सर्वथाऽऽदरणीयं चाति-ष्ठन्ते दार्शनिकाः सूक्ष्मधियो विद्वांसः । भाष्यं चास्य वैया-सिकं सुप्रसिद्धम् । शब्दतोऽर्थतश्च बह्वर्घम् । टीका चास्य भाष्यस्य तत्त्ववैशारद्यनाम्नी वाचस्पतिमिश्रविरचिताऽती-व युक्तोपयुक्ता भूर्य्यर्थदायिनी च न विद्यावता केनापि कदा-चिदस्पृहणीया वक्तुमुत्सह्यते । तथापि सूत्रार्थमात्रं ज्ञातुमनसा मधिकारिधियामुपकाराय यथा वैयासिकं भाष्यं तावद् सर्वतो न पर्य्याप्तं, तथा टीकामपि काश्चिन्न जातु सर्वतः पर्य्याप्तामीक्षामहे । भोजराजप्रभृतिविहितानि वृत्त्यन्तराणि च बहुवादीनि सन्त्यपि न सूत्रार्थं यथाभिलाषमवगमयन्ति, यथास्थानं वैदिकीं सरणिं च नानुहरन्ति । तदिदं सर्वम-भिलक्ष्यास्माभिरेषा वैदिकी वृत्तिर्निरमायि । मन्यते चैषा सूत्रार्थमात्रमधिगन्तुकामानां बालानां महोपकारं निर्हरि-

ष्यति, परिश्रमं चास्माकीनमवश्यं सफलीकरिष्यति। तामिमां सहर्षं पाठयन्तु विद्वांसो विमत्सराः, पठन्तु च यथाकामं बटवो योगतत्त्वाभिलाषुकाः, प्रमोमुद्यन्तां चानया श्रोतारोऽपि भगवद्दर्शनोत्सुका इति नित्यं सम्प्रार्थयामहे सर्वकामप्रदं भगवन्तमन्तर्यामिनम्।

॥ इति शुभम् ॥



ओ३म्

# अथ श्रीमहामुनिपतञ्जलिप्रणीतयोगसूत्राणां वर्णानुक्रमणिका ।

( अ )

( ह )


॥ इति ॥





# अथ योगदर्शनम्

## समाधिपादः ॥

यस्य योगोपदेशेन योगिनः परमां गतिम् ।
यान्ति तं योगदं वन्दे भगवन्तं पतञ्जलिम् ॥ १ ॥
योगमार्गं बुभुत्सूनां बालानामुपकारिणीम् ।
कुर्वेऽहं योगसूत्राणां वृत्तिं श्रुत्यनुसारिणीम् ॥ २ ॥

**अथ** कैवल्यहेतुसत्त्वपुरुषान्यताप्रत्ययस्य समाहितचित्तैकलभ्यत्वेन योगापेक्षामनुसन्दधानो भगवान् पतञ्जलिर्निखिलजगदुद्दिधीर्षया विस्तरेण योगमाख्यातुं तच्छास्त्रं तावदारभते—

**"अथ योगानुशासनम् ॥ १ ॥**

**अथ** शब्दोऽधिकारार्थः । अधिकारः प्रस्तावः, आरम्भ इत्यनर्थान्तरम् । **योगानुशासनम्**=योगपदमत्र समाधिमाह **"युज्-**

वृत्तिश्चेतःपरिणतिः।




समाधौ" इत्यस्माद्योगपदनिष्पत्तेः, तस्यानुशासनम्-अनुशिष्यते व्युत्पाद्यते लक्षणभेदोपायप्रयोजनादिकं येन तदनुशासनं शास्त्रं प्रारब्धं वेदितव्यमित्यर्थः ॥ १ ॥

**ननु** योगस्य किं लक्षणं ? तत्राह—

**"योगश्चित्तवृत्तिनिरोधः"** ॥ २ ॥

चित्तवृत्तिनिरोधो योग इत्यन्वयः । चित्तशब्देनात्र शुद्धसत्त्वप्रधानं मनोबुद्ध्यादिशब्दवाच्यमन्तःकरणसामान्यं गृह्यते । तस्य चित्तसत्त्वस्य याः **वृत्तयः**=शान्तघोरमूढलक्षणाः वक्ष्यमाणभेदाः बाह्याभ्यन्तरविषयाकाराश्चेतःपरिणतयस्तासां यो **निरोधः**=अभ्यासवैराग्यादिसाधनानुष्ठानेन क्लेशकर्मादिहानहेतुरुच्छेदोऽभावः प्रतिलोमपरिणामेन स्वकारणे प्रविलय इति यावत्, स योग इत्यर्थः ।

**चित्ता**वस्थाविशेषो हि योगः । स च सम्प्रज्ञातासम्प्रज्ञातभेदेन द्विविधः । तत्र यस्तावदभ्यासवैराग्यादिसाधनानुष्ठानेन प्रमाणादिसर्ववृत्तिनिरोधाद्विशुद्धसत्त्वप्रधानस्य चेतसो ध्येयमात्रैकगोचरः सात्त्विकपरिणामविशेषलक्षणोऽवस्थाभेदः स **सम्प्रज्ञातः**= सम्यक् संशयविपर्ययादिराहित्येन प्रज्ञायते साक्षात्क्रियते ध्येयं वस्तु यस्मिन्निरोधे चित्तावस्थाविशेषे स तथा । तत्र ध्येयमात्रैकगोचरसात्त्विकवृत्तिसद्भावेऽपि क्लेशकर्मादिहेतुराजसतामसनिखिलवृत्तिनि-

रोधाल्लक्षणसमन्वयः । एतदेव सम्प्रज्ञातसमाधिमच्चित्तमेकतत्त्वमात्रालम्बनत्वाद् **एकाग्रं**, समाधिमत्त्वाच्च **समाहित**मिति योगिभिरुदाहियते । परवैराग्येण चाभ्यस्यमानेन तस्या अपि निरोधे यश्चित्तस्य निर्वासनस्य सतो भर्जितचणकवत्कार्य्यजननाक्षमतया स्वकारणे संस्कारमात्रावशेषेणावस्थानलक्षणोऽवस्थाविशेषः, **सोऽसम्प्रज्ञात** इति सुतरां तत्र लक्षणसमन्वयः । तदिदं चित्तं निरुद्धसकलवृत्तित्वात्समाहितं भवन्**निरुद्ध**मित्याख्यायते । तदेतदवस्थाद्वयमेव चित्तस्य योगपदव्यपदेश्यम् । तद्व्यतिरिक्तन्तु क्षिप्तं, मूढं, विक्षिप्तमिति त्र्यवस्थं चित्तम् । रजःसमुद्रेकात्प्रतिक्षणं कर्मवायुना नानाविधेषु विषयेषु व्यग्रतया प्रेर्य्यमाणं नितान्तचञ्चलं **क्षिप्तम्** । तमःसमुद्रेकान्निद्रादिवृत्तिमत्तया जाड्यबहुलं **मूढम्** । सत्त्वप्रधानत्वात्कादाचित्कसद्भूतार्थस्थेमशालि क्षिप्ताद्विशिष्टं **विक्षिप्तम्** । तत्र कथञ्चिद्वृत्तिनिरोधसद्भावेऽपि क्लेशकर्मादिहानहेतुचित्तवृत्तिनिरोधाभावान्नास्ति लक्षणव्यभिचार इति द्रष्टव्यम् ॥ २ ॥

**ननु** चित्तवृत्तिनिरोधवेलायां चितिशक्तिः पुरुषः क्वावतिष्ठते ? तत्राह—

**"तदा द्रष्टुः स्वरूपेऽवस्थानम्"** ॥ ३ ॥

**तदा**=चित्तवृत्तिनिरोधसमये **द्रष्टुः**=दृग्रूपस्य पुरुषस्य **स्वरूपे**=दृश्याभावात्कुसुमापाये मणेरिव स्वात्मनि **अवस्थानम्**=अवस्थितिर्भवतीत्यर्थः ।

**यद्वा** द्रष्टुरिति पदमावर्त्यते, तत्र सौत्रं पुरुषपरम्, आवर्तितं परमेश्वरपरं, द्रष्टृत्वसामान्यात् । **द्रष्टुः**=दृग्रूपस्य पुरुषस्य **द्रष्टुः**= विश्वसाक्षिणो भगवतो जगदधिपतेः **स्वरूपे**=दृश्यान्तराभावात्तादात्मनि अवस्थानं भवतीत्यर्थः ।

**यदाऽ**स्य सर्वाश्चित्तवृत्तयो निरुध्यन्ते, तदा प्रकृत्यवस्थानं हित्वा स्वस्थः पुमान् स्वेनात्मना चिता परमात्मानन्दमुपभुञ्जानः परमात्मन्येवावतिष्ठते । यतः परमात्मैव सर्वेषां भूतानां परमा गतिः **'एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः''** ( बृ० ४ । ३ । ३२ ) इत्यादिश्रुतेरिति भावः ॥ ३ ॥

**ननु** दृग्रूपस्य पुरुषस्य कूटस्थनित्यत्वेन सर्वदा स्वरूपावस्थितत्वाद्व्युत्थानेऽपि तथात्वं किं न स्यात् ? तत्राह—

**"वृत्तिसारूप्यमितरत्र"** ॥ ४ ॥

द्रष्टुरित्यनुवर्तते । **इतरत्र**=चित्तवृत्तिव्युत्थानसमये स्वरूपावस्थितस्यापि द्रष्टु**र्वृत्तिसारूप्यं**=बुद्धया दर्शितविषयत्वात्तद्वृत्तिभिः समानरूपत्वं, शान्तो दुःखी मूढोऽहमिति तद्वृत्त्यविशिष्टवृत्तित्वं भवतीत्यर्थः ।

**यद्यपि** पुरुषस्य न काचन वृत्तिः । अपरिणामित्वात् । तथापि बुद्धिसन्निधानात्तत्प्रतिबिम्बितस्तच्छायापत्त्या भेदग्रहाभावेन शान्त

घोरमूढलक्षणास्तद्वृत्तीरात्मनि समारोप्य तथाऽभिलपति । तादृगभिलाप एव च तस्य तद्वृत्त्यविशिष्टवृत्तित्वं, न किंचिदपरमिति ध्येयम् ॥ ४ ॥

**ननु** कतिविधास्ताः निरोद्धव्याश्चित्तस्य वृत्तयःसन्ति ? तत्राह —

**"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः"** ॥ ५ ॥

**क्लिष्टाक्लिष्टाः**= धर्माधर्मवासनासमूहप्रसवभूमयोऽस्मितादिप्रवृत्तिहेतवो राजसतामसचित्तवृत्तयः प्रमाणादिलक्षणाः क्लिष्टाः, तद्भिन्नाः सत्त्वपुरुषविवेकविषयाः गुणाधिकारविरोधिन्यः सात्त्विक्यः अक्लिष्टाः । तदेतदुभयभेदभिन्नाः सत्योऽपि **वृत्तयः**=निरोद्धव्याश्चित्तवृत्तयः पुनः **पञ्चतय्यः**=तयपोऽवयववाचित्वेऽपि लक्षणया प्रकारवाचित्वं, पञ्चप्रकाराः भवन्तीत्यर्थः ।

**यद्यपि** चित्तस्य बह्वचो वृत्तयः सहस्रेणापि पुरुषायुषैः परिगणयितुमशक्याः, **तथापि** क्लिष्टाक्लिष्टभेदभिन्नाः निरोद्धव्याश्चित्तवृत्तयः पञ्चतय्य एव । लज्जादिवृत्त्यन्तराणां तास्वेवान्तर्भावसंभवेन तन्निरोधेनैव निरोधोपपत्तेरिति भावः ॥ ५ ॥

**ननु** कास्ताः पञ्चवृत्तयः ? तत्राह—

**"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः"** ॥ ६ ॥

निर्देशे यथावचनं विग्रहः । चार्थे द्वन्द्वसमासः इतरेतरयोगः । प्रमाणानि च, विपर्य्ययश्च, विकल्पश्च निद्रा च, स्मृतिश्चेति तथेत्यर्थः ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजन् प्रमाणसामान्यलक्षणमाह—

**"प्रत्यक्षानुमानागमाः प्रमाणानि" ॥ ७ ॥**

**प्रमाणानि**=प्रमीयतेऽर्थो येन तत्प्रमाणं प्रमाकरणमिति यावदिति प्रमाणसामान्यलक्षणम् । तानि **प्रत्यक्षानुमानागमा** इति भेदात्त्रिविधानीत्यर्थः ।

तत्र चक्षुरादिजन्याऽनधिगताबाधितार्थविषया चित्तस्य वृत्तिः प्रत्यक्षं प्रमाणम् । लिङ्गपरामर्शजन्या तथाभूतार्थविषया चित्तस्य वृत्तिरनुमानम् । आप्तेन दृष्टोऽनुमितो वार्थो येनशब्देनोपदिश्यते तस्माच्छब्दाज्जायमाना तथाभूतार्थविषया चित्तस्य वृत्तिरागमः । पौरुषेयो बोधश्च सर्वत्र फलं प्रमेति विशेषलक्षणं बोध्यम् । अधिकन्तु सांख्यसूत्रवैदिकवृत्तौ द्रष्टव्यम् ॥ ७ ॥

विपर्य्ययं लक्षयति—

**"विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" ॥ ८ ॥**

**अतद्रूपप्रतिष्ठम्**--अत्रासमर्थसमासः, तेन तद्रूपाप्रतिष्ठमिति योज्यम् । तद्रूपे ज्ञानप्रतिभासि यद्रूपं तस्मिन् न प्रतितिष्ठति न

स्थिरीभवतीत्यप्रतिष्ठम्=अस्थिरं यन्मिथ्याज्ञानं=मिथ्यात्वं-बाधितत्वं-तथाभूतं ज्ञानम्-अतथाभूतार्थे तथोत्पद्यमानं ज्ञानमिति यावद्, यथाऽयं भुजंगमो, रूप्यं चेदमिति, स विपर्य्यय इत्यर्थः ।

तत्रातद्रूपप्रतिष्ठमित्युक्त्या संशयोऽपि संगृहीतो वेदितव्यः । सर्वजनीनबाधाभाववति विकल्पे मा प्रसाङ्क्षीदिति मिथ्याज्ञानमुपात्तम् । तद्भेदाश्चाविद्यादयः पञ्चाग्रे सुव्यक्ता इति विवेकः ॥ ८ ॥

विकल्पं लक्षयति—

**"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ॥ ९ ॥**

**वस्तुशून्यः**=विषयो वस्तु तच्छून्यः=निर्विषय इति यावद् यः **शब्दज्ञानानुपाती**=शब्दज्ञानमत्र शब्दविषयं ज्ञानसामान्यं विवक्षितं-तदनुपतनशीलः--तदनुजायमानः -- शब्दज्ञानसमनन्तरभावीति यावत्--सदसद्विषयाभावेऽपि शब्दज्ञानमाहात्म्यात्तत्तद्विषयाकारो यो बन्ध्यापुत्रः, खपुष्पं, राहोःशिरः, आत्मनश्चैतन्यमित्यादिवृत्तिलक्षणश्चित्तपरिणामभेदः, स विकल्प इत्यर्थः ॥

(विकल्पः)
वस्तुशून्यत्वान्नायं प्रमाणं, प्रेक्षावतां बाधेऽप्यवश्यम्भावित्वाद् व्यवहारहेतुत्वाच्च नायं विपर्ययः, संशयो वेति द्रष्टव्यम् ।

वस्तुशून्यो यः प्रत्ययः स विकल्पः, कीदृशः स प्रत्ययः ? शब्दज्ञानानुपाती=शब्दश्च ज्ञानं च शब्दज्ञाने, ते अनुपातिनी पश्चाद्भाविनी यस्य—प्रमाणप्रत्ययस्येवार्थविषयौ शब्दज्ञानलक्षण-

व्यवहारौ कार्यं यस्येति यावत्—स तथेत्यर्थ इति वार्तिककृदनुसारिविवरणकारः ॥ ९ ॥

निद्रां लक्षयति—

" **अभावप्रत्ययालम्बना वृत्तिर्निद्रा** " ॥ १० ॥

अधिकाराद्वृत्तिपदलाभेऽपि पुनर्वृत्तिग्रहणं निद्रायाः वृत्तत्वविधानार्थम् । अभावं प्रत्ययन्ते--प्रतिगच्छन्त्यस्मिन्नन्याः वृत्तय इत्यभावप्रत्ययः--तमः, तदालम्बना--तद्विषया वृत्तिः-चित्तस्य वृत्तिर्या, सा निद्रा । यद्वा जाग्रत्स्वप्नवृतीनामभावस्य यः प्रत्ययः--कारणं बुद्धिसत्त्वाच्छादकं तमः, तदेवालम्बनं--विषयो यस्याः सा तथा वृत्तिः--चित्तवृत्तिर्निद्रेत्यर्थः ।

यस्यामवस्थायां ह्येषा वृत्तिरुदयते तां वैदिकाः सुषुप्तिरित्याचक्षते । तत्र तमोमात्रं गोचरयच्चित्तसत्वं निरुद्धप्रायमवतिष्ठते । पुरुषश्च तस्य तथात्वाद् वृत्तिसारूप्यमभजमानः स्वस्थः परब्रह्म परमेश्वरं सुखमध्यास्ते । स्वेनात्मना चिता च तदानन्दमुपभुञ्जानः समाधिमोक्षयोरिव शोकातिगो मोदते । यत्रेदं श्रुतं भवति "**स परेऽक्षर आत्मनि सम्प्रतिष्ठते**" (प्र० ४।९) "**सता सोम्य ! तदाऽसम्पन्नो भवति**" छा० ६।८।१) "**य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते**" (बृ० २।१। १७) "**तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं**

किञ्चन वेद नान्तरम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्" (बृ० ४।३।२१) "तीर्णोहि तदा सर्वान् शोकान् भवति" (बृ०४।३।२२) इति। स्मर्यते च दर्शनान्तरे "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" (सां०५।११६) इति। ब्रह्मरूपता--ब्रह्मसरूपता। ब्रह्मसारूप्यं च पुरुषस्य ब्रह्मणाऽविभागः। स च भेदगर्भोऽभेदप्रतिभास इति भावः ॥ १० ॥

स्मृतिं लक्षयति—

" **अनुभूतविषयासम्प्रमोषः स्मृतिः** "॥ ११ ॥

सम्प्रमोषः = स्तेयम्--परार्थादानं "**मुष** स्तेये" इत्यस्मात्सम्प्रमोषपदव्युत्पत्तेः। स्मृतेः पूर्वानुभूतो विषयः स्वार्थः, पूर्वाननुभूतस्तु परार्थः। तथा च प्रमाणादिभिरनुभूताद्विषयादधिकविषयाविषयत्वमेवानुभूतविषयासम्प्रमोषः, धर्मधर्मिणोरभेदोपचारादेवंभूता वृत्तिः स्मृतिरित्यर्थः ॥ ११ ॥

प्रत्यक्षादि भिः

**नन्वा**सां वृत्तीनां निरोधः कथं स्यात्? तत्राह-

" **अभ्यासवैराग्याभ्यां तन्निरोधः**"॥ १२ ॥

**अभ्यासवैराग्याभ्यां**=वक्ष्यमाणलक्षणाभ्यां समुच्चिताभ्यामभ्यासवैराग्याभ्यां **तन्निरोधः**=तासां पूर्वोक्तचित्तवृत्तीनां निरोधो भवतीत्यर्थः।

तत्र **वैराग्येण** चित्तवृत्तिनिरोधः, **अभ्यासेन** च तत्स्थैर्यसम्पत्तिरित्येव निरोधे तदुभयसमुच्चय इति विवेकः।

अनुष्ठानक्रमापेक्षया तु **वैराग्याभ्यासाभ्यां तन्निरोधः,,** इति सौत्रः पाठो युक्तः ॥ १२ ॥

अभ्यासं लक्षयति—

**"स्थितौ यत्नोऽभ्यासः"** ॥ १३ ॥

**स्थितौ** = निमित्तसप्तमीयं, वक्ष्यमाणलक्षणेनापरवैराग्येण निरुद्धराजसतामसवृत्तिचित्तस्य या सात्विकवृत्तिप्रवाहितालक्षणैकाग्रता सा स्थितिस्तदर्थो **यत्नः** = बहिः प्रवाहशीलमपि चित्तं सर्वथा निरोत्स्यामीति मानसोत्साहेन स्थितिसाधनानां यमनियमादीनामनुष्ठाने प्रयत्नः, सोऽभ्यास इत्यर्थः ॥ १३ ॥

**ननु** दृढभूमित्वाभावे कथमभ्यासोऽयमनादिपरिपन्थिनि व्युत्थानसंस्कारे जाग्रति स्थित्यै कल्पेत ? तत्राह—

**दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः** ॥ १४ ॥

अभ्यास इत्यनुवर्तते **दीर्घकालनैरन्तर्य्यसत्कारासेवितः**= दीर्घकालेन आ मरणाद् दीर्घकालेन, नैरन्तर्य्येण आ सुषुप्तेर्विच्छेदराहित्येन, सत्कारेण तपोब्रह्मचर्यश्रद्धातिशयेन **चासेवितः**=सुसम्पादितः सम्यगनुष्ठितो **दृढभूमिः**=दृढा निश्चला व्युत्थानसंस्कारैश्चालयितुमशक्या भूमिः अवस्थितिर्यस्य स तथाऽभ्यासो भवतीत्यर्थः ॥ १४ ॥

वैराग्यं द्विविधं-परमपरं च । तत्राऽभ्यासं लक्षयित्वा राजस-तामसचित्तवृत्तिनिरोधोपायभूतं सम्प्रज्ञातान्तरङ्गसाधनमपरवैराग्यं तावल्लक्षयति—

**" दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् " ॥ १५ ॥**

**दृष्टानुश्रविकविषयवितृष्णस्य**= स्त्रियोऽन्नं पानमैश्वर्य्यमिति चेतनाचेतनात्मानो दृष्टविषयाः, गुरुपाठादनुश्रवणादनुश्रवो वेदः, ततोऽधिगताः परलोकादिप्रकृतिलयान्ताः आनुश्रविकाः, तेषु वितृष्णस्य परिणामित्वविरसत्वदुःखरूपत्वादिदोषदर्शनाद्विगतगर्द्धस्य योगमारुरुक्षोरधिकारिपुरुषस्य या तत्तद्विषयसंप्रयोगे सति हेयोपादेयशून्या चित्तस्थितिः सम्प्रयुक्तेषु दिव्यादिव्यविषयेषूपेक्षाबुद्धिरिति यावत् सा **वशीकारसंज्ञावैराग्यं**= वशीकारनामकमपरवैराग्यमित्यर्थः ।

**यद्यपि** यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञाभेदाच्चतस्रः संज्ञाः वैराग्यस्य । **तथाऽप्यन्तरा** यतमानव्यतिरेकैकेन्द्रियसंज्ञाः वशीकारसंज्ञालाभाभावेन तत्सम्पत्त्यैव तत्सम्पत्तिमनुसन्दधताऽऽचार्य्येण न ताः पृथक् लक्षिता इति ध्येयम् ।

**तत्र** बहिर्विषयेन्द्रियप्रवृत्तिहेतुरागादिमलपरिपाकार्थं मैत्र्यादिभावनारम्भो **यतमानसंज्ञा** प्रथमा, तदारम्भे सति केचन मलाः

पक्वाः, केचित्पक्ष्यन्ते, तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकावधारणं **व्यतिरेकसंज्ञा** द्वितीया। इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण चेतसि व्युस्थानमेके**न्द्रियसंज्ञा** तृतीया। औत्सुक्यमात्रस्यापि निवृत्ति रुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिरिति यावत्, **वशीकारसंज्ञा** तुरीयेति विवेकः ॥ १५ ॥

एवं राजसतामसचित्तवृत्तिनिरोधोपायस्य सम्प्रज्ञातान्तरङ्गसाधनापरवैराग्यस्य लक्षणमभिधाय तत्फलभूतस्यासम्प्रज्ञातान्तरङ्गसाधनस्य सात्त्विकवृत्तिनिरोधोपायस्य परवैराग्यस्य लक्षणमाह—

"**परं पुरुषख्यातेर्गुणवैतृष्ण्यम्**" ॥ १६ ॥

**पुरुषख्याते**ः=सत्त्वपुरुषान्यताख्यातेः सम्प्रज्ञातसमाधिपाटवेन गुणत्रयात्मकात्प्रधानात्पुरुषस्य भेदज्ञानाद् गुणतत्कार्य्यभिन्नत्वेन करतलामलकवत् पुरुषस्य साक्षात्कारादिति यावद् **यद्गुणवैतृष्ण्यं**=व्यक्ताव्यक्तधर्मकेषु गुणेषु वैगर्द्ध्यं कार्यकारणभावापन्नेषु तेषु गर्द्धाराहित्यं सम्प्रज्ञातफलभूतायां गुणपरिणामविशेषबुद्धिसत्वपरिणतौ सत्वपुरुषान्यताख्यातावपि प्राकृतत्वेन दुःखात्मकत्वानुसंधानात्तृष्णाराहित्यमिति यावत्, **तत्परं**=ज्ञानस्यैव परकाष्ठत्वाद् ज्ञानप्रसादाख्यमुत्कृष्टं वैराग्यमित्यर्थः।

एतस्यैव नान्तरीयकं कैवल्यम्, इदमेव हि धर्ममेघोत्तरावधिरित्युत्कृष्टं तदित्यनुसन्धेयम्।

भोजराजस्तु **पुरुषख्यातेः**=उत्पन्नगुणपुरुषविवेकख्यातेर्योगिनो यद्गुणवैतृष्ण्यं = गुणतत्कार्यविषयं तृष्णाराहित्यं तत्परं = प्रकृष्टं वैराग्यमित्यर्थमाचष्टे ॥ १६ ॥

निरोधोपायभूते अभ्यासवैराग्ये लक्षिते। संप्रति ताभ्यां निरुद्धराजसतामसचित्तवृत्तिपुरुषस्य योऽयं सम्प्रज्ञाताख्यः प्रथमः समाधिर्भवति, तस्य सप्रकारं लक्षणमाह—

"**वितर्कविचारानन्दास्मितानुगमात्सम्प्रज्ञातः**" ॥ १७ ॥

**वितर्कविचारानन्दास्मितानुगमात्** = स्थूले भूतभौतिके आलम्बने धारितस्य चित्तस्य तदाकारतापत्तिलक्षणो भावनापरपर्य्यायः स्थूलविषयत्वात् स्थूलः सात्त्विकपरिणामविशेषो **वितर्कः**, स्थूलकारणभूतसूक्ष्मे पञ्चतन्मात्रलक्षणे आलम्बने धारितस्य चित्तस्य तदाकारतापत्तिलक्षणो भावनापरपर्यायः सूक्ष्मविषयत्वात्सूक्ष्मः सात्त्विकपरिणामविशेषो **विचारः**, एषैव द्वयी ग्राह्यसमापत्तिरित्युच्यते, विषयसन्निधानेनानन्दप्राप्तिहेतुत्वादुभयविधमिन्द्रियमानन्दः,तत्रास्मितापेक्षया स्थूल आलम्बने धारितस्य चित्तस्य तदाकारतापत्तिलक्षणो भावनापरपर्य्यायः स्थूलविषयत्वात्स्थूलः सात्त्विकपरिणामविशेष **आनन्दः**,पुरुषाभेदमापन्ना साहंकारा बुद्धिरस्मिता, "**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता**"इत्यग्रे वक्ष्यमाणत्वात्। तत्रास्मिताख्ये ग्रहीतरि सूक्ष्मे आलम्बने धारितस्य चित्तस्य तदा-

कारतापत्तिलक्षणो भावनापरपर्य्यायः सूक्ष्मविषयत्वात्सूक्ष्मः सात्त्विकपरिणामविशेष **अस्मिता**, वितर्कश्च विचारश्चानन्दश्चास्मिता च तास्तथा, तासामनुगमात् सम्बन्धात् वितर्कादिरूपसाक्षात्कारविशेषनिरूपितसम्बन्धाश्रयात् प्रतिपत्तव्यस्तत्समुदायात्मको यः समाधिः, स **सम्प्रज्ञातः** = सम्प्रज्ञाताख्यः इत्यर्थः ।

शरीरादिप्रकृत्यन्तेभ्यः प्रकृतितत्कार्येभ्यः प्रविविक्ततया प्रत्यगात्मनः पुरुषस्य साक्षात्काराय हि सर्वो योगारम्भः । प्रत्यगात्मा पुरुषश्च पय इव पयसा प्रकृत्या तत्कार्य्येण सूक्ष्मेण स्थूलेन चैकात्म्यं गतो न द्रागित्येव प्रविविक्ततया साक्षात्कर्तुं पार्य्यते यावत्तु तदखिलं विविच्य न साक्षात्क्रियते । तत्साक्षात्कारश्च नर्ते योगादित्यनुसन्दधान आचार्यः प्रथमं तावत् तत्साधनं सम्प्रज्ञातनामानं सालम्बनं योगमुपदिशति । तत्रालम्बनं स्थूलसूक्ष्मग्राह्यग्रहणग्रहीतृभेदाच्चतुर्विधम् । अत एव तदालम्बनः सम्प्रज्ञातयोगोऽपि चतुर्विधः—वितर्कानुगतो, विचारानुगतः, आनन्दानुगतः, अस्मितानुगत इति । तदन्यतमत्वञ्च सम्प्रज्ञातत्वमिति तत्सामान्यलक्षणमिति निष्कर्षः ।

इममेव समाधिं सालम्बनत्वात् संसारबीजक्लेशकर्मादिवासनासहितत्वाद्वा सबीजं मुमुक्षुसिंहयञ्चोदाहरन्ति । स्पष्टञ्चैतत्सर्वमग्रे, तदलमिह विस्तरेण ॥ १७॥

अपरवैराग्योपायं सम्प्रज्ञातं सप्रकारं लक्षयित्वा संप्रति परवैराग्योपायमसम्प्रज्ञातं सोपायं लक्षयति—

**"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" ॥१८॥**

**विरामप्रत्ययाभ्यासपूर्वः**=सर्वासां चित्तवृत्तीनामभावो विरामः, तस्य यः प्रत्ययः कारणं परवैराग्यं, तस्य योऽभ्यासः पौनःपुन्येनानुष्ठानं, तदेव पूर्वं कारणं यस्य, स तथा परवैराग्यकारणक इति यावद् यः **संस्कारशेषः**=निरोधसंस्कारः संस्कारः, चित्तस्य संस्कारमात्रेणावशेषः सर्वथा निर्वृत्तिकत्वेनावस्थानविशेष इति यावत्, **सोऽन्यः**=पूर्वोक्तात्सम्प्रज्ञातात्सबीजसमाधेर्विलक्षणोऽसम्प्रज्ञातः समाधिरित्यर्थः ।

यस्मिन् चित्तावस्थाविशेषे परवैराग्याभ्यासपाटवात् सर्वाश्चित्तवृत्तयस्तत्संस्काराश्च परवैराग्येण सह निरुध्यन्ते, केवलं निरोधसंस्काराश्चावशिष्यन्ते । स एव विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषश्चित्तावस्थाविशेषोऽसम्प्रज्ञातः समाधिरितिभावः ।

तत्रान्य इति लक्ष्यनिर्देशः, **संस्कारशेष** इति लक्षणं, **विरामप्रत्ययाभ्यासपूर्व** इत्युपायकथनमिति विवेकः ।

एतमेव समाधिं प्राप्ताः योगिनो ब्रह्मविद्वरिष्ठा इत्याख्यायन्ते। सप्तमी भूमिकाऽपि ज्ञानस्येयमेव । इयमेव च योगस्य परमकाष्ठा। एतस्यामेवावस्थायां स्वरूपपररूपाभ्यामवस्थानाभावाच्चित्तं निरा-

लम्वनं सदभावप्राप्तमिव भवति, पुरुषश्च स्वरूपावस्थितो निजेनात्मना ब्रह्मानन्दमुपभुञ्जानो ब्रह्मणि निराकुलमवतिष्ठते । यत्रेदमुक्तं भवति "**समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता**" (सां० ५।११६।) "**तदा द्रष्टुः स्वरूपेऽवस्थानम्**" (यो० १।३।) इति

संसारबीजभूतानां क्लेशकर्मादिवासनानामत्राभावादयमेव निर्बीजः समाधिः, कैवल्यफलकत्वाच्चायमेव मुमुक्षुभिरुपादेय इति द्रष्टव्यम् ॥१८॥

**ननु** किं संस्कारशेषलक्षणश्चित्तसत्त्वनिरोधः सर्वोऽपि मुमुक्षुभिरुपादेयः ? इत्याकाङ्क्षायां हेयोपादेयताबोधार्थमुक्तलक्षणं निरोधं विभज्य दर्शयति--

"**भवप्रत्ययो विदेहप्रकृतिलयानाम्**"॥ १९. ॥

अन्य इत्यनुवर्तते । संस्कारशेषलक्षणश्चित्तवृत्तिनिरोधो द्विविधः- भवप्रत्ययः, उपायप्रत्ययश्च । तत्र **विदेहप्रकृतिलयानां**=भूतानां पृथिव्यादीनामन्यतममात्मत्वेनाभिमत्य तदुपासनवासनावासितचेतस्काः-पिण्डपातानन्तरं भूतेषु तेषु लीनाः संस्कारमात्रावशेषमनसो विगतस्थूलदेहत्वाद् **विदेहाः**, अव्यक्तमहदहंकारपञ्चतन्मात्रप्रकृतीनामन्यतममात्मत्वेनाभिमत्य तदुपासनवासनावासितचेतस्काः पिण्डपातानन्तरमव्यक्तादीनामेवान्यतमस्मिन् लीनाः संस्कारमात्रावशेष-

मनसः **प्रकृतिलयाः**, विदेहाश्च प्रकृतिलयाश्च ते तथा, तेषां यः संस्कारशेषलक्षणश्चित्तसत्त्वनिरोधः स **भवप्रत्ययः**=भवन्ति जायन्ते यस्मिन् सति जन्तव इति भवोऽविद्या, प्रकृत्यादिष्वनात्मस्वात्मख्यातिरिति यावत्, स प्रत्ययः कारणं यस्य निरोधस्य, स तथा, अविवेकपूर्वक इति यावदित्यर्थः ।

**यद्यपि** विदेहप्रकृतिलयानामपि चित्तवृत्तिनिरोधो वर्तते । **तथापि** स केवलमात्मत्वेनाभिमत्योपासितेषु भूततत्कारणपञ्चतन्मात्राहङ्कारमहदव्यक्तेषु लयादेव, न विवेकप्रत्ययलब्धजन्मनो ज्ञानप्रसादमात्रात्परवैराग्यात् । अतः पुरुषाविवेकपूर्वकतया जायमानोऽसौ निरोधो योगाभासत्वाच्चित्तस्य साधिकारत्वेन पुनरुत्थानसम्भवाच्च नोपादेयो मुमुक्षुभिः, अपि तु दूरतो हेय इति भावः ॥ १९ ॥

विभागान्तरमाह—

**" श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् "** ॥२०॥

अन्य इत्यनुवर्तते । **इतरेषां**=विदेहप्रकृतिलयव्यतिरिक्तानां देवर्ष्यार्य्यम्लेच्छानां योगिनां यो निरोधो भवति, स **श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वकः**=कैवल्यहेतुसत्त्वपुरुषान्यताप्रत्ययोपायो योगो मे भूयादिति दृष्टानुश्रविकविषयवितृष्णस्य योगविषया चेतसोऽभिरुचिः **श्रद्धा**, श्रद्दधानस्य विवेकार्थिनस्तत्सम्पादनोत्साहो

**वीर्य्यं**, समुपजातवीर्य्यस्यानुष्ठानार्थमागमानुमानाचार्य्योपदेशाधिगतेषु योगाङ्गेषु स्मरणं **स्मृतिः**, अङ्गान्यनुतिष्ठतो जायमानः सम्प्रज्ञातः समाधिः **समाधिः**, समाहितचित्तस्य जायमानो विवेकप्रत्ययः **प्रज्ञा**, जातप्रज्ञस्य तदभ्यासात्तद्विषयं वैराग्यमित्यपि द्रष्टव्यं, श्रद्धा च वीर्य्यञ्च स्मृतिश्च समाधिश्च प्रज्ञा च, तास्तथा, ताश्च क्रमादुपायोपेयभावेन प्रवर्त्तमानाः पूर्वं कारणं यस्य निरोधस्य, स तथा श्रद्धादिकारणक इत्यर्थः ।

अयमेव श्रद्धाद्युपायपूर्वकत्वादुपायप्रत्ययो निरोधो "**विरामेति** सूत्रेण लक्षितो मुमुक्षुभिश्चोपादेय इति बोध्यम् ॥ २० ॥

**ननु** श्रद्धाद्युपायवतां योगिनां मध्ये केषामासन्नः समाधिलाभो भवति ? तत्राह—

**"तीव्रसंवेगानामासन्नः" ॥ २१ ॥**

अन्य इत्यनुवर्त्तते । प्राग्भवीयसंस्कारादृष्टाभ्यां श्रद्धाद्युपायानां मृदुमध्याधिमात्रभेदेन त्रैविध्यात्तदुपायाः योगिनस्त्रयः—मृदूपायो मध्योपायोऽधिमात्रोपाय इति । तेऽपि पुनर्मृदुमध्याधिमात्रसंवेगत्वात्प्रत्येकं त्रिधेति नव योगिनो भवन्ति । तद्यथा मृदूपायमृदुसंवेगः १ मृदूपायमध्यसंवेगः २ मृदूपायाधिमात्रसंवेगः ३ मध्योपायमृदुसंवेगः ४ मध्योपायमध्यसंवेगः ५ मध्योपायाधिमा-

त्रसंवेग: ६ अधिमात्रोपायमृदुसंवेग: ७ अधिमात्रोपायमध्यसंवेग: ८ अधिमात्रोपायाधिमात्रसंवेगः ९ इति । तत्र चरमयोगिनामधिमात्रोपायानां तीव्रश्रद्धाद्युपायवतां **तीव्रसंवेगानाम्**=अधिमात्रवैराग्याणाम्**आसन्नः**=ईषद्विलम्बोऽसम्प्रज्ञातः समाधिस्तत्फलञ्च कैवल्यं भवतीत्यर्थः ॥ २१ ॥

विशेषान्तरमाह—

**" मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः " ॥ २२ ॥**

अन्यस्तीव्रसंवेगानामिति पदद्वयं पूर्वसूत्राभ्यामनुवर्तते । **मृदुमध्याधिमात्रत्वात्** = पूर्वसूत्रोक्ततीव्रसंवेगान्तर्गततीव्रत्वस्यापि मन्दमध्याधिमात्रत्वेन त्रैविध्यान्मृदुतीव्रसंवेगाधिमात्रोपाययोग्यपेक्षया मध्यतीव्रसंवेगानामधिमात्रतीव्रसंवेगानां चाधिमात्रोपायानां योगिनां **ततोऽपि**=आसन्नादपि **विशेषः**=आसन्नतरः आसन्नतमः समाधिस्तत्फलं च भवतीत्यर्थः ॥ २२ ॥

नन्वासन्नतमसमाधिलाभे भवति कश्चिदन्योऽप्युपायः ? तत्राह—

**" ईश्वरप्रणिधानाद्वा " २३ ॥**

तीव्रसंवेगानां ततोऽपि विशेष इति पूर्वसूत्राभ्यामनुवर्तते । अप्यर्थो वाकारः । **प्रणिधानाद्वा**=वक्ष्यमाणलक्षणस्येश्वरस्य वक्ष्य-

माणभावनालक्षणभक्तिविशेषादप्यधिमात्रतीव्रसंवेगानामासन्नतमः समाधिस्तत्फलं च भवतीत्यर्थः ।

अत्रेश्वरप्रणिधानं द्वितीयपादादौ वक्ष्यमाणं न ग्राह्यम् । तस्य सम्प्रज्ञातसमाधिहेतुत्वेन सूत्रणात् । किन्त्वसम्प्रज्ञातसमाधिहेतुभूतः "**तज्जपस्तदर्थभावनम्**" ( यो० १ । २८ ) इत्यागामिसूत्रे वक्ष्यमाणलक्षणो भावनाविशेष इति बोध्यम्॥ २३॥

**ननु** प्रकृतिपुरुषव्यतिरिक्तः कोऽयमीश्वरः स्यात् ? तत्राह—

**" क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः "** ॥ २४ ॥

**क्लेशकर्मविपाकाशयैः** = अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं जात्यायुर्भोगाः विपाकः, विपाकानुगुणाः वासनाः आशयाः, तैरपरामृष्टः परामर्शः सम्बन्धस्तद्रहितो यः **पुरुषविशेषः** = पुरुषेषूत्तमः सदैव मुक्तः सदैवाप्तकामः सदैव सर्वशक्तिः, स ईश्वर इत्यर्थः ॥ २४ ॥

नन्वेवंलक्षणे तस्मिन् किं प्रमाणं ? तत्राह—

**"तत्र निरतिशयं (१) सार्वज्ञ्यबीजम्"** ॥ २५ ॥

( १ ) सर्वज्ञबीजमिति क्वचित्पाठः, स भावप्रधानो व्याख्येयः ।

तत्र = ईश्वरे **यन्निरतिशयम्** = अतिशयान्निष्क्रान्तं **सार्वज्ञ्यबीजं** = सर्वज्ञतानिमित्तं ज्ञानं, तदेव प्रमाणमित्यर्थः ।

यत्सातिशयं तत्कुत्रचिन्निरतिशयं यथा परिमाणम् । सातिशयञ्चेदमस्मदादीनां ज्ञानं, यतः कश्चित्किञ्चिदेव जानाति, कश्चिद् बहु, कश्चिद् बहुतरमिति । तद्यत्र निरतिशयं,स एव पुरुषविशेषः ईश्वर इति भावः ।

**एवं** निरतिशया क्रियाशक्तिरपि तत्र प्रमाणं द्रष्टव्यम् ॥२५॥

**ननु** सर्वज्ञानमयवेदप्रकाशकर्षय एव तथा सन्तु, किं तद्व्यतिरिक्तेनेश्वरेण ? तत्राह—

"**पूर्वेषामपि गुरुः कालेनानवच्छेदात्**" ॥ २६ ॥

ईश्वर इत्यनुवर्तते । स एष ईश्वरः **पूर्वेषामपि**=वेदप्रकाशकत्वेन सम्मतानामृषीणामपि **गुरुः**=उपदेष्टा, जनको वाविद्यते । कुतः ? **कालेनानवच्छेदात्**= आद्यन्तविधुरत्वादित्यर्थः ।

यस्यात्मतो वा परतो वा कथमपि कालेनावच्छेदो न भवति स एव पुरुषविशेष ईश्वरो भवितुमर्हति, नान्यः कश्चित् । उत्पत्तिविनाशशीलत्वादिति भावः ।

**पूर्वेषामपि** = पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्मविष्णुमहेश्वरादी-

नामपि **गुरुः**=पिताऽन्तर्यामी, विद्यया ज्ञानचक्षुःप्रदश्च । कुतः ? **कालेनानवच्छेदात्** = ब्रह्मादयो हि द्विपरार्द्धादिकालेनावच्छिन्नाः कालानवच्छिन्नं गुरुं विना न सम्भवन्तीत्यर्थ इति वार्तिककृतः ॥ २६ ॥

नन्वेतस्येश्वरस्य कथं प्रणिधानं कर्तव्यमित्याकाङ्क्षायां तत्प्रणिधानं दर्शयितुमादौ तस्य वाचकमाह—

**"तस्य वाचकः प्रणवः"** ॥ २७ ॥

**तस्य** = ईश्वरस्य **वाचकः** = नाम **प्रणवः** = ओंकार इत्यर्थः ॥ २७ ॥

वाचकमुक्त्वा प्रणिधानं दर्शयति—

**"तज्जपस्तदर्थभावनम्"** ॥२८॥

प्रणिधानमिति प्रकृतम् । **तज्जपः** = तस्य प्रणवस्य जपः **तदर्थभावनं** = तदर्थस्य चेश्वरस्य भावनं परमप्रेम्णा मनस्यनुभावनं प्रणिधानमित्यर्थः ।

**स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् ।**
**स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥ १ ॥**

**तत्र** प्रणवजपः स्वाध्यायः, तदर्थभावनं योगः, क्रमप्रदर्शिका पञ्चमी विभक्तिरिति विवेकः ।

वैराग्यसहकृतादेतस्मात्प्रणिधानादभिमुखीभूतः ईश्वरः क्षिप्रमिदमस्याभिमतमस्त्वित्यभिध्यानमात्रेण प्रणिधातारमेनं योगिनमनुगृह्णाति । ततोऽस्य चित्तमनाकुलं समाधीयते, समाहितचित्तस्य च पुरुषख्यातिः, तद्विषयं च तदनु वैराग्यम्, ततश्चासम्प्रज्ञातः समाधिरासन्नतमो भवतीत्यनुसन्धेयम् ॥ २८ ॥

ननु किमीश्वरप्रणिधानं कुर्वन्तं योगिनं द्रागित्येव समाधिरेवोपतिष्ठते ? तत्राह—

**"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" ॥२६॥**

न केवलं समाधिरेवेत्यपेरर्थः । **ततः** = ईश्वरप्रणिधानात् **प्रत्यक्चेतनाधिगमोऽपि** = जीवात्मा पुरुषः प्रत्यक् चेतनस्तस्याधिगमः स्वरूपतो दर्शनं-प्रकृतितत्कार्य्यभिन्नत्वेन पुरुषस्य स्वरूपतो दर्शनमप्य**न्तरायाभावश्च** = वक्ष्यमाणानां योगविघ्नानां निवृत्तिश्चास्य भवतीत्यर्थः ।

तत्र पूर्वमीश्वरप्रणिधानं, ततोऽन्तरायाभावः, ततः सम्प्रज्ञातः, ततः पुरुषख्यातिः, ततो वैराग्यं, ततोऽसम्प्रज्ञातः समाधिः, ततः परमात्मप्रकाशः, ततः कैवल्यमिति क्रमो बोध्यः ॥ २९ ॥

**ननु** के तेऽन्तरायाः ? तत्राह—

**" व्याधिस्त्यानसंशयप्रमादाऽऽलस्याऽविरतिभ्रान्ति-**

**दर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" ॥ ३० ॥**

धातुरसकरणानां वैषम्याज्जायमानो ज्वरादिः=**व्याधिः** १ चित्तस्य लुब्धत्वेऽपि कर्मानर्हता=**स्त्यानं** २ योगो मे साध्यो न वेत्युभयकोटिस्पृग्ज्ञानं=**संशयः** ३ योगाङ्गानां यमनियमादीनामननुष्ठानं=**प्रमादः** ४ योगाङ्गानुष्ठाने प्रवृत्त्यभावहेतुः कफादिना तमसा च कायचित्तयोर्गुरुत्वम्=**आलस्यं** ५ विषयरतिः=**अविरतिः** ६ गुरूपदिष्टयोगाङ्गेषु योगानङ्गत्वदर्शनं=**भ्रान्तिदर्शनं** ७ योगाङ्गानुष्ठानेऽपि मधुमत्यादियोगभूमीनामलाभः=**अलब्धभूमिकत्वं** ८ लब्धायां च भूमौ चित्तस्यास्थिरत्वम्=**अनवस्थितत्वम्** ९ इत्येतानि नव प्रमाणादिवृत्त्युत्पादकत्वेन चित्तस्य विक्षेपकत्वाच्चित्तविक्षेपाः ये, तेऽन्तरायाः=योगमलापरनामानो योगप्रतिपक्षत्वाद् योगविघ्ना इत्यर्थः ।

तत्र संशयभ्रान्तिदर्शने वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधेः साक्षात्प्रतिपक्षौ, व्याध्यादयस्तु सप्त वृत्तिसहचारितया तत्प्रतिपक्षा इति विवेकः ॥ ३० ॥

विक्षेपानुक्त्वा तत्सहभुव आह—

**"दुःखदौर्मनस्याऽङ्गमेजयत्वश्वासप्रश्वासाः विक्षेपसहभुवः" ॥ ३१ ॥**

आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नं प्रतिकूलवेदनीयं बाधनालक्षणं दुःखम् १ इच्छाविघाताच्चेतसः क्षोभः=**दौर्मनस्यम्** २ आसनमनःस्थैर्यबाधकं सर्वाङ्गकम्पनम् = **अङ्गमेजयत्वम्** ३ अन्तरेण प्रयत्नं स्वयमेव प्राणस्य बाह्यवाय्वाचमनं = **श्वासः** ४ एवमेव कोष्ठ्यवायुनिःसारणं = **प्रश्वासः** ५ इत्येते पञ्च **विक्षेप-सहभुवः** = विक्षेपेषु सत्सु भवनशीला इत्यर्थः ।

विक्षिप्तचित्तस्यैते भवन्ति, न समाहितचित्तस्येति भावः ॥३१॥

नन्वेषां निवृत्त्यर्थं किं कर्तव्यमिति जिज्ञासायां प्रणिधान-मुपसंहरन् तत्कर्तव्यतामाह —

**" तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः "** ॥ ३२ ॥

**तत्प्रतिषेधार्थं**=तेषां सहभूसहितानां विक्षेपाणां निवृत्त्यर्थ-**मेकतत्त्वाभ्यासः**=एकं तत्त्वमत्रेश्वरः, प्रकृतत्वात्, "**एकोदेव**=" ( श्वे० ६ । ११ ) इत्यादिश्रुतेश्च, तस्याभ्यासः पूर्वोक्तप्रणि-धानं कर्तव्यमित्यर्थः ।

**एकं तत्त्वं** = किञ्चिदेकं स्थूलं तत्त्वमिति वार्तिककृद्भोज-राजमधुसूदनसरस्वत्यः ॥ ३२ ॥

**ननु** समले चेतसि कथमीश्वरप्रणिधानं स्यात् ? **तत्राह**—

**" मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्य-विषयाणां भावनातश्चित्तप्रसादनम् "** ॥ ३३ ॥

**सुखदुःखपुण्यापुण्यविषयाणाम्**=अत्र सुखादिशब्दाः मत्वर्थीयार्शआद्यजन्तत्वात्सुखादिमत्परा द्रष्टव्याः, सुखिनो दुःखिनः पुण्यवन्तोऽपुण्यवन्तश्च यथाक्रमं विषयाः सन्ति यासां तास्तथा, तासां **मैत्रीकरुणामुदितोपेक्षाणां** = सौहार्दं मैत्री, करुणा कृपा, हर्षो मुदिता, औदासीन्यमुपेक्षा, मैत्री च करुणा च मुदिता चोपेक्षा च तास्तथा, तासां चतसृणां **भावनातः** = पुनः पुनश्चेतसि निवेशनलक्षणया भावनया **चित्तप्रसादनं** = चित्तस्य नैर्मल्यं सम्पादयितव्यमित्यर्थः ।

ईर्ष्यादिकालुष्येण कलुषीकृतं हि चित्तं न स्थितिपदं लभते, तेन तन्निवृत्त्यर्थं सुखसम्भोगापन्नेषु सर्वप्राणिषु 'साध्वेतन्मम मित्राणां सुखित्वमिति मैत्रीं, दुःखितेषु च कथं नु नामैषां दुःखनिवृत्तिः स्यादिति करुणां, पुण्यवत्सु च पुण्यानुमोदनेन मुदिताम्, अपुण्यवत्सु चोपेक्षां भावयेत् । तत्र मैत्रीभावनया चित्तस्येर्ष्याकालुष्यं, करुणाभावनया परापकारचिकीर्षाकालुष्यं, मुदिताभावनयाऽसूयाकालुष्यम्, उपेक्षाभावनया चामर्षकालुष्यं, निवर्त्तते । तन्निवृत्तौ च प्रसन्नं चित्तमीश्वरप्रणिधानादाशु स्थितिपदं लभत इति भावनाचतुष्टयं विधेयमिति भावः ।

"भावना चात्रोत्पादनं, समाधिप्रतिबन्धकरागद्वेषादिमलापसारणं च प्रसादनम्" इति वार्तिककारः ॥ ३३ ॥

ननु यथा प्रसन्नं चित्तमीश्वरप्रणिधानादाशु स्थितिपदं लभते, तथाऽस्ति कश्चिदन्योऽप्युपायो येन स्थितिपदं लभेत ? तत्राह—

**" प्रच्छर्दनविधारणाभ्यां वा प्राणस्य " ॥ ३४ ॥**

चित्तं स्थितिपदं लभत इति शेषः । **प्राणस्य**= कोष्ठ्यस्य वायोः **प्रच्छर्दनविधारणाभ्यां**= नासिकापुटद्वयेन योगशास्त्रोक्तात्प्रयत्नविशेषाद्रेचनं प्रच्छर्दनं, रेचितस्य तस्य बहिरेव स्थापनं नतु सहसा प्रवेशनं विधारणम्, एतेन पूरणविधारणे अपि संगृहीते, ताभ्यां वा चित्तं स्थितिपदं लभत इत्यर्थः ।

प्रसन्नचित्तः प्राणस्य प्रच्छर्दनविधारणाभ्यां वा मनसः स्थितिं सम्पादयेदिति भावः ॥ ३४ ॥

उपायान्तरमाह—

**"विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी " ॥ ३५ ॥**

**वा**=अथवा **विषयवती**= गन्धरसरूपस्पर्शशब्दाः विषयाः सन्ति यस्याः सा तथा **प्रवृत्तिः**=तत्तद्विषयसाक्षात्कारात्मिका प्रकृष्टा चित्तवृत्तिः **उत्पन्ना**= नासिकाग्रजिव्हाग्रतालुजिव्हामध्यजिव्हामूलेषु

चित्तस्य संयमात्तज्जयेन जायमाना **मनसः**=चित्तस्य **स्थितिनिब-न्धनी**=स्थैर्य्यप्रयोजिका भवतीत्यर्थः ।

**ना**सिकाग्रे धारणाध्यानसमाधीन् कुर्वतस्तज्जयाज्जायमाना या दिव्यगन्धसंवित् सा **गन्धप्रवृत्तिः**, एवं जिव्हाग्रे दिव्यरस-संवित्, तालुनि रूपसंवित्, जिव्हामध्ये स्पर्शसंवित, जिव्हामूले शब्दसंवित, इत्येताः विषयवत्यः प्रवृत्तयोऽल्पेनैव कालेनोत्पन्नाः शास्त्रानुमानाचार्य्योपदेशेभ्योऽवगतेषु सुसूक्ष्मेष्वर्थेषु विश्वाससमुत्पा-दयन्त्यो विवेकख्यातिविषयायां पुरुषविशेषविषयायां वा स्थितौ चित्तं निबध्नन्ति । योगस्य विश्वासमूलत्वात् । **तस्माद्** योगी विषयवत्या प्रवृत्त्या वा चित्तस्थितिं सम्पादयेदिति भावः ॥ ३५॥

अन्यं चित्तस्थित्युपायमाह—

**"विशोका वा ज्योतिष्मती"** ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनीत्यनुवर्तते । **वा**=अथवा **विशोका**=हृदयपुण्डरीकस्थानके चित्तसत्त्वे, चित्तसत्त्वकारणभू-तायां विगतरजस्तमोमलायामस्मितायाञ्च संयमात्तज्जयेनोत्पन्ना शोकहेतुरजःसम्बन्धाभावाद्विशोका **ज्योतिष्मती**=चित्तसत्त्वास्मि-ताख्यज्योतिर्विषयत्वाच्च ज्योतिष्मती प्रवृत्तिर्मनसःस्थितिनिब-न्धिनी भवतीत्यर्थः ।

विशोकया ज्योतिष्मत्या प्रवृत्त्या वा चित्तस्थितिं सम्पादये-दिति भावः । तत्र ज्योतिष्मती संज्ञा, विशोकेति तद्विशेषणम् । चित्तसत्त्वविषया प्रवृत्तिः **'विषयवती विशोका ज्योतिष्मती'** चित्तसत्त्वकारणभूतास्मितामात्रविषया च प्रवृत्तिरस्मितामात्रा **विशोका ज्योतिष्मती**ति सञ्ज्ञाविवेकः ॥ ३६ ॥

चित्तस्थितेरन्यमुपायमाह—

**"वीतरागविषयं वा चित्तम्"** ॥ ३७ ॥

स्थितिपदं लभत इति शेषः । **वा**=अथवा **वीतरागविषयं**= वीताः विगताः रागाः रागद्वेषमोहाः येषां, ते वीतरागाः पुण्यपुञ्जैकमूर्त्तयो वेदप्रकाशका ऋषयस्तेषां चित्तं विषयो यस्य, तत्तथाभूतं **चित्तं**=योगिनश्चित्तं स्थितिपदं लभत इत्यर्थः ।

चित्तस्थितये वीतरागपुरुषचित्तविषयचित्तेन भवितव्यमिति भावः । **वी**तो रागो यस्मात्चित्तात्तद्विषयं योगिनश्चित्तं स्थितिपदं लभत इति वार्तिककृतः ॥ ३७ ॥

उपायान्तरमाह—

**"स्वप्ननिद्राज्ञानालम्बनं वा"** ॥ ३८ ॥

चित्तमित्यनुवर्तते । स्थितिपदं लभत इतिशेषः । मातापित्रा-

चार्य्यादिविषयस्य स्वप्नज्ञानस्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सौषुप्तसुखगोचरस्य च निद्राज्ञानस्य यदालम्बनं मातापित्राचार्य्यादिसौषुप्तसुखं, तदेवालम्बनं यस्य, तत्तथाभूतं वा योगिनश्चित्तां स्थितिपदं लभत इत्यर्थः ।

चित्तस्थैर्य्याय स्वप्नज्ञानविषयचिन्तेन, निद्राज्ञानविषयचिन्तेन वा भवितव्यमिति भावः ॥ ३८ ॥

अन्यं सुगमोपायमाह—

**" यथाभिमतध्यानाद्वा "** ॥ ३९ ॥

चित्तमित्यनुवर्तते । स्थितिपदं लभत इति शेषः । **अभिमतम्**= आत्मनोऽभीष्टं नाभिचक्रहृदयपुण्डरीकमूर्द्धज्योतिरादिकं वा चन्द्रसूर्य्याग्न्यादिकं वा, विषयमनतिक्रम्येति यथाभिमतं, तस्य **ध्यानात्** = संयमाद्वा चित्तां स्थितिपदं लभत इत्यर्थः ।

शास्त्रनिर्दिष्टेषु ध्येयेषु यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकं चित्तमन्यत्र परमात्मन्यपि स्थितिपदं लभत इति भावः ॥ ३९ ॥

**ननु** कथं चित्तस्य स्थितिपरिपाकं जानीमः ? तत्राह—

**"परमाणुपरममहत्त्वान्तोऽस्य वशीकारः "** ॥ ४० ॥

**अस्य** = स्थित्युपायमनुतिष्ठतो योगिनश्चित्तस्य **परमाणु-परममहत्त्वान्तः** = सूक्ष्मे निविशमानस्य परमाणुपर्यन्तः स्थूले निविशमानस्य च परममहत्त्वाश्रयगगनादिपर्य्यन्तो **वशीकारः** = अप्रतिघातः केनाप्यप्रतिबद्धता यत्रेच्छति तत्रैव निष्प्रत्यूहं स्थिति-पदं लभत इति यावत् परमो वशीकारो जायत इत्यर्थः ।

इदमेव स्थितिपरिपाकस्य लिंगम् । अनेन हि वशीकारेण परिपूर्णं योगिनश्चित्तं न पुनरुपायानुष्ठानकृतं परिकर्मापेक्षते, तत्पर्यन्तत्वादुपायानुष्ठानस्येति विज्ञेयम् ॥ ४० ॥

नन्वेवं लब्धस्थितिकस्य चित्तस्य किंविषयः किंरूपश्च सम्प्रज्ञातः समाधिर्भवति ? तत्राह—

**"क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः" ॥ ४१ ॥**

**अभिजातस्य**=कुलीनस्य स्वभावतो निर्मलस्य **मणेरिव**=स्फटिकमणेरिव **क्षीणवृत्तेः**=क्षीणाः अभ्यासवैराग्याभ्यां निरुद्धाः राजसतामसप्रमाणादिवृत्तयो यस्य तत्तथा, तस्य नितान्तनिर्मलस्य चित्तसत्त्वस्य या **ग्रहीतृग्रहणग्राह्येषु**=भूमिकाक्रमवशेनात्र पाठक्रमस्य व्यत्यासो न्याय्यः, विषयेन्द्रियास्मितासु **तत्स्थतदञ्ज-**

**नता**=तासु स्थितस्यात्मीयमाकारमपिधाय तदाकारता, सा **समापत्तिः**=तदात्मकः सम्प्रज्ञातः समाधिर्भवतीत्यर्थः ।

**यथा** हि स्फटिको मणिर्जवाकुसुमादिसम्बन्धादात्मीयं शौक्ल्यमपिधाय कुसुमीयलोहितनीलादिरूपतामापन्नस्तद्रूपेण निर्भासते तथैवाऽपगतरजस्तमोवृत्तिकं चित्तसत्त्वं विषयेन्द्रियास्मितासंबन्धादात्मीयमन्तःकरणरूपमपिधाय तद्रूपतामापन्नं तद्रूपेण निर्भासते तत्र यस्तावच्चित्तस्यात्मरूपमपिधाय विषयेन्द्रियास्मितारूपमापन्नस्य तद्रूपापत्तिनिर्भासः सात्विकपरिणामविशेषः, स एव **सम्प्रज्ञातः** समाधिरिति भावः ।

तत्र "**ग्रहीतृग्रहणग्राह्येषु**" इति विषयनिर्देशः "**तत्स्थतदञ्जनता**" इति रूपनिर्देश इति विवेकः ।

स्थूलसूक्ष्मभेदाद् ग्राह्यं हि द्विविधम् । तत्र स्थूलग्राह्यविषयो **वितर्कः**, सूक्ष्मग्राह्यविषयो **विचारः**, ग्रहणविषय **आनन्दः**, अस्मिताख्यग्रहीतृविषयश्चा**स्मिता**, इति चतुर्धा सम्प्रज्ञातः समाधिरिति न पूर्वोत्तरविरोध इति ध्येयम् ।

**इदमत्र बोध्यम्**—यद्यपि पूर्वोत्तरसूत्रयोः स्थूलसूक्ष्मग्राह्यग्रहणग्रहीतृविषयत्वाच्चतुर्धा सम्प्रज्ञाताख्या समापत्तिः सूत्रकारेण दर्शिता । तथापि साऽनन्तरमेवादिव मन्तव्या न सामान्यतः ।

ग्रहीतृग्रहणयोर्वृत्तिदशायां ग्राह्यकोटावेव निक्षेपसम्भवेन तद्विषय-समापत्त्योरपि ग्राह्यसमापत्तावन्तर्भावसम्भवात् । तथा चैकविधा सत्येव सामान्यतो ग्राह्यविषया सम्प्रज्ञाताख्या समापत्तिरवा-न्तरभेदाद् "**वितर्कविचार**" ( यो० १ । १७ ) इत्यादिके पूर्वसूत्रे चतुर्धा "**क्षीणवृत्तेः**" ( यो० १ । ४१ ) इत्युत्तरत्र च त्रिधेति प्रदर्शिता भवति । युक्तञ्चैतद् । अन्यथा स्थूलग्राह्यविषयसमापत्तिप्रदर्शनानन्तरं सूक्ष्मग्राह्यविषये सविचार-निर्विचारे समापत्ती प्रदर्श्य किम्पर्य्यन्तञ्चानयोः सूक्ष्मविषयत्व-मिति जिज्ञासायां "**सूक्ष्मविषयत्वञ्चालिङ्गपर्य्यवसानम्**" ( यो० १ । ४५ ) इति सूत्रकृतां सूत्रणं न संगच्छेत । ग्रहीतृ-ग्रहणयोरप्यलिङ्गान्तर्गतत्वात् । "**ता एव सबीजः समाधिः**" ( १ । ४६ ) इति ग्राह्यमात्रसमापत्तिविषयः उपसंहारश्च नोप-पद्येत । ग्रहीतृग्रहणसमापत्त्योरनुपसंहरणात् । तस्मात् सामान्यतो ग्राह्यविषया सम्प्रज्ञाताख्या समापत्तिः पुरस्तादेकधा, ग्राह्यस्य च स्थूलसूक्ष्मभेदेन द्वैविध्यात्तद्विषया समापत्तिरपि पश्चाद्द्विविधा, तत्राप्यवान्तरभेदात्पुनः सवितर्कादिभेदेन चतुर्धेति विभाग एव साधीयानिति ॥ ४१ ॥

स्थूलसूक्ष्मग्राह्यविषया द्विधाऽपि समापत्तिरवान्तरभेदाच्चतुर्विधा

भवति, तद्यथा सवितर्का निर्वितर्का सविचारा निर्विचारा चेति । तत्र स्थूलग्राहविषयायाः सवितर्कायाः समापत्तेर्लक्षणमाह—

**"शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः"॥४२॥**

**शब्दार्थज्ञानविकल्पैः** = श्रोत्रेन्द्रियग्राह्यो ध्वनिपरिणामभेदः शब्दः, सामान्याश्रयो व्यक्तिरर्थः, तद्विषया शब्दजन्या बुद्धिवृत्तिर्ज्ञानं, शब्दश्चार्थश्च ज्ञानञ्च तानि तथा, तेषां विकल्पैरभेदावभासैः **सङ्कीर्णा** = मिश्रा विकल्पविषयीभवदर्थविषयिणी या समापत्तिः, सा सवितर्केत्यर्थः ।

ग्राह्यविषयत्वेन क्रोडीकृतानां तासां ग्राह्यविषयाणां समापत्तीनां यत्र समाधौ चित्तस्यालम्बनीभूतः स्थूलो भूतभौतिकोऽर्थो गवादिर्वा घटादिर्वा शब्दसङ्केतस्मृत्या स्ववाचकशब्देन स्वविषयज्ञानेन च जलदुग्धवत्सङ्कीर्णः गौरयमित्येवमाकारः प्रतिभासते स सवितर्कसंज्ञकः सम्प्रज्ञातः समाधिरिति भावः ।

सेयं समापत्तिर्यथाश्रुतविकल्पितार्थविषयत्वादपरप्रत्यक्षमिति गीयते । **विपरीततर्केणं वितर्कस्तेन सहिता सवितर्का** इति वार्तिककारः ॥ ४२ ॥

स्थूलग्राह्यविषयां सवितर्कां लक्षयित्वा तद्विषयां निर्वितर्कां लक्षयति—

**" स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का " ॥ ४३ ॥**

समापत्तिरित्यनुवर्तते । **स्मृतिपरिशुद्धौ**= यस्य वृद्धव्यवहारादिनाऽवगतस्य शक्त्याख्यशब्दसङ्केतस्य स्मृत्या स्ववाचकशब्देन स्वविषयज्ञानेन च सङ्कीर्णो गोघटादिरर्थः सवितर्कायां प्रतिभासते, तस्य शब्दसङ्केतस्य या स्मृतिः, तस्याः परिशुद्धौ अपगमे सति शब्दज्ञानयोरनुपस्थितत्वाद**र्थमात्रनिर्भासा**= गोघटादिरर्थस्तन्मात्रस्य निर्भासः प्रकाशो यस्यां, सा तथा **स्वरूपशून्येव**= स्वीयं ग्रहणात्मकं यद्रूपं तेन शून्येव न्यग्भूतज्ञानांशत्वेनार्थमात्रेवेति यावत् या समापत्तिः, सा निर्वितर्केत्यर्थः ।

अत्र **स्मृतिपरिशुद्धा**विति शब्दविकल्पनिरासः, **स्वरूपशून्येवे**ति ज्ञानविकल्पव्युदासः, **अर्थमात्रनिर्भासे**ति स्वरूपनिर्देशः इति विवरणकारः ।

सेयं समापत्तिर्निर्विकल्पानारोपितार्थविषयत्वात्परप्रत्यक्षमित्यभिधीयते । एतयैव समापत्त्या सद्भूतमर्थं प्रत्यक्षीकृत्याचार्य्याः विकल्प्योपदिशन्ति चोपपादयन्ति च । अत एव तन्मूला प्रथमा समापत्तिर्योगिनो विकल्पितार्थविषयैव भवतीति मनसि धर्तव्यम् ॥ ४३ ॥

स्थूलग्राह्यविषया द्वयी समापत्तिर्लक्षिता । संप्रति सूक्ष्मग्राह्यविषयां सविचारां निर्विचाराञ्च लक्षयितुमतिदिशति —

**" एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता " ॥ ४४ ॥**

समापत्तिरित्यनुवर्तते । **एतयैव**= पूर्वलक्षितया सवितर्कया निर्वितर्कया च समापत्त्यैव **सूक्ष्मविषया** = सूक्ष्मग्राह्यगोचरा **सविचारा निर्विचारा च**=सविचारनिर्विचाराख्या द्वयी समापत्तिर्व्याख्याता=लक्षिता वेदितव्येत्यर्थः ।

**तत्र** देशकालकारणानामनुभवैरवच्छिन्नेष्वभिव्यक्तघटपटादिधर्मकेषु सूक्ष्मग्राह्येषु या शब्दादिविकल्पसङ्कीर्णा समापत्तिः सा **सविचारा,** देशकालकारणानामनुभवैरतीतवर्तमानभविष्यद्भिर्घटपटादिधर्मैश्चानवच्छिन्नेषु केवलसूक्ष्मग्राह्येषु या शब्दादिविकल्पशून्या समापत्तिः सा **निर्विचारे**ति भावः ।

पूर्वपूर्वपरित्यागेनोत्तरोत्तरयोगानुष्ठानार्थं क्रमनिर्देशः । सविचारनिर्विचारयोः सूक्ष्मविषयत्वाभिधानात्सवितर्कनिर्वितर्कयोः स्थूलविषयत्वमर्थादुक्तं भवतीति द्रष्टव्यम् ॥ ४४ ॥

**ननु** किं पर्य्यन्तमस्या ग्राह्यसमापत्तेः सूक्ष्मविषयत्वं ? **तत्राह**—

**" सूक्ष्मविषयत्वञ्चालिङ्गपर्य्यवसानम् "** ॥ ४५ ॥

**सूक्ष्मविषयत्वञ्च**= यदुक्तं सविचाराया निर्विचारायाश्च ग्राह्यसमापत्तेः सूक्ष्मविषयत्वं, तद्**लिङ्गपर्य्यवसानम्** = अलिङ्गे प्रधाने पर्य्यवसानं परिसमाप्तिर्यस्य तत्तथेत्यर्थः ।

**तत्र** सूक्ष्मभूतेभ्यः पञ्चतन्मात्रेभ्यः सूक्ष्मोऽहङ्कारः, ततो महत्तत्वं, ततः प्रधानमिति विवेकः ।

**एतेन** ग्रहीतृग्रहणसमापत्त्योरप्यत्रैवान्तर्भाव इति सूचितं वेदितव्यम् ॥ ४५ ॥

इदानीं ग्राह्यविषयत्वेन सर्वाः समापत्तीः पिण्डीकृत्य तासां सम्प्रज्ञातत्वमुपसंहरन्नाह—

**" ता एव सबीजः समाधिः " ॥ ४६ ॥**

**ता एव**=पूर्वोक्ताश्चतस्रः समापत्तय एव **सबीजः समाधिः**= सम्प्रज्ञातो योग इत्यर्थः ॥ ४६ ॥

**ननु** ग्राह्यविषयासु चतसृषु समापत्तिषु काऽस्ति शोभना समापत्तिः ? इत्याकाङ्क्षायां निर्विचारायाः फलतः शोभनत्वमाह—

**" निर्विचारवैशारद्येऽध्यात्मप्रसादः " ॥ ४७ ॥**

**निर्विचारवैशारद्ये**= निर्विचारस्य समाधेर्यद् वैशारद्यं रजस्तमोमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य प्रधानान्तसूक्ष्मग्राह्य-

गोचरो रजस्तमोभ्यामनभिभूतः सात्त्विकत्वान्नितान्तनिर्मलः स्थितिप्रवाहः, तस्मिन् सत्यध्यात्मप्रसादः= आ भूतभौतिकेभ्यः आ च प्रधानादस्य समाहितचित्तस्य भगवतो योगिनो युगपद् व्यवहितविप्रकृष्टसामान्यविशेषसूक्ष्मस्थूलसद्भूतनिखिलार्थविषयः साक्षात्कारलक्षणो बुद्धिसत्त्ववृत्तिभेदः स्फुटप्रज्ञालोकापरनामा प्रज्ञाप्रसादो भवतीत्यर्थः ।

**प्रज्ञाप्रसादमारुह्याशोच्यः शोचतो जनान् ।**
**भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति ॥१॥**

**इद**मेव निर्विचारसमाधेर्वैशारद्यं सत्त्वपुरुषान्यताख्यातेः परमोपायः, नैतद्धित्वा तत्प्राप्तये किञ्चिदन्यत्साधनं विद्यते । निर्विचारवैशारद्ये सत्येव लब्धाध्यात्मप्रसादो योगी प्रकृतितत्कार्याणि पृथक्पृथक्पश्यन् तदन्यतया पुरुषं साक्षादीक्षते । अत एवाध्यात्मप्रसादोऽसौ स्फुटप्रज्ञालोकः प्रज्ञाप्रसादः समाधिप्रज्ञा ऋतम्भरा प्रज्ञा सत्त्वपुरुषान्यताख्यातिः इति नामभिर्व्यपदिश्यते । तज्जननी च केवला सम्प्रज्ञाताख्या निर्विचारा समापत्तिरेवेति शोभना सा समापत्त्यन्तरेभ्य इति भावः ॥ ४७ ॥

**अ**स्याध्यात्मप्रसादस्य योगिजनसिद्धान्वर्थसंज्ञाकथनेन तत्र योगिनां सम्मतिमाह—

**"ऋतम्भरा तत्र प्रज्ञा" ॥ ४८ ॥**

**तत्र**= निर्विचारवैशारद्ये सति समाहितचित्तस्य भगवतो योगिनो या **प्रज्ञा**= समाधिप्रज्ञा जायते, तस्या **ऋतम्भरा**= ऋतं सत्यमविकल्पितं सद्भूतमर्थं बिभर्ति विषयतया धारयतीति ऋतम्भरेति संज्ञा भवतीत्यर्थः ॥ ४८ ॥

**ननु** निर्विचारायाः शब्दानुमानविषयीभूतार्थविषयभावनाविशेषत्वेन तत्प्रकर्षलब्धजन्मा समाधिप्रज्ञाऽपि तद्विषयविषयैव सेत्स्यति नान्यविषयेति ? तत्राह—

**"श्रुतानुमानप्रज्ञाभ्यामन्यविषया**
**विशेषार्थत्वात्" ॥ ४९ ॥**

प्रज्ञेत्यनुवर्तते । **श्रुतानुमानप्रज्ञाभ्यां**=शास्त्रजन्या प्रज्ञा श्रुतप्रज्ञा, अनुमानजन्या प्रज्ञा अनुमानप्रज्ञा, ताभ्यां श्रवणमननरूपाभ्यां द्वाभ्याम**न्यविषया**= भिन्नविषया समाधिप्रज्ञा विज्ञातव्या, कुतः ? **विशेषार्थत्वात्**= सामान्याश्रयधर्मिविशेषोऽर्थो विषयो यस्याः, सा तथा, तस्याः भावस्तत्त्वं, तस्मादर्थविशेषविषयत्वादित्यर्थः ।

शब्दानुमाने हि सामान्येनैव कृतसङ्केते न विशेषेण । व्यभिचारादानन्त्याच्च । तेन सामान्यमेव गोचरयितुमर्हतो न विशे-

कुर्वती

षम् । तञ्च विशेषं साक्षात्कुर्वन्ती समाधिप्रज्ञा ताभ्यामन्यविषयैव सिध्यति, न तद्विषयविषया, प्रत्यक्षात्मकत्वादिति भावः ॥४९॥

नन्वनादिपरिपन्थिषु शब्दादिविषयभोगवासनाख्यव्युत्थान-संस्कारेषु सत्सूत्पन्नाऽपि समाधिप्रज्ञा कथं स्थितिं लप्स्यते, कथं वा संसारबीजभूतान् क्लेशकर्माशयान् निरोत्स्यते ? तत्राह—

**"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" ॥ ५० ॥**

**तज्जः**=निर्विचारसमाधिप्रज्ञाजन्यः **संस्कारः**=तद्वासनाभेदः **अन्यसंस्कारप्रतिबन्धी**=अन्येषां व्युत्थानसंस्काराणां प्रतिबन्धको भवतीत्यर्थः

**यद्यपि** चिरन्तनाः व्युत्थानसंस्काराः स्वकार्यप्रमाणादिव्यु-त्थानप्रत्ययोपजनने समर्थाः । तथापि तत्त्वास्पर्शित्वाद् दुर्बलास्ते तत्त्वस्पर्शिप्रज्ञासंस्कारेण बलीयसा अभिभाव्यन्ते । अभिभूतेभ्यश्च तेभ्यो न पुनस्तत्प्रभवाः व्युत्थानप्रत्यया भवन्ति । तदभावे च समाधिप्रज्ञा तत्संस्काराश्च चक्रवत्पुनःपुनरनुवर्तमानाः स्थास्नू भूत्वा सुतरामुपचीयन्ते । प्रतिदिनमुपचीयमानेभ्यश्च तेभ्यः संसारबी-जभूतानां क्लेशकर्माशयानां सर्वात्मना निरोधे सति भोगान्निर्विण्णं चित्तं न पुनः संसाराय चेष्टते । ख्यातिपर्यवसानं हि चित्तचेष्टि-तमिति भावः ॥ ५० ॥

× स्थास्नू भूयात तु ???

ननु व्युत्थानसंस्कारनिरोधेऽपि प्रज्ञातत्संस्कारनिरोधाभावाच्चित्तविलयहेतुर्निर्बीजः समाधिः कथं भवेत् ? तत्राह—

**"तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" ॥५१॥**

**तस्यापि**=प्रज्ञानिरोधः अपिशब्दार्थः, प्रज्ञानन्तरं जायमानेन ज्ञानप्रसादमात्रेण परेण वैराग्येण संस्कारोपजननद्वारा प्रज्ञायाः निरोधात्तज्जन्यसंस्कारस्यापि **निरोधे**= प्रविलये सति **सर्वनिरोधात्**=सर्वेषां व्युत्थानसंस्काराणां प्रज्ञातत्संस्काराणां च सह वैराग्येण निरोधात् – प्रविलया**न्निर्बीजः**= निरालम्बनः क्लेशकर्मादिवासनालक्षणबीजरहितो वा **समाधिः**= चित्तावस्थाविशेषोऽसम्प्रज्ञाताख्यो योगो भवतीत्यर्थः ।

**आगमेनानुमानेन ध्यानाभ्यासरसेन च ।**
**त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ १ ॥**

**आगमः**=श्रुतिविहितं श्रवणम् । **अनुमानं**=श्रुतस्य मननं **ध्यानं**= तत्र प्रत्ययैकतानत्वं, **तस्याभ्यासः**= समाधिः, तस्य **रसः**= सारो निर्विचारः सम्प्रज्ञातः समाधिः ; अनेन निदिध्यासनमुक्तम् । **प्रज्ञा**=समाधिप्रज्ञा पुरुषसाक्षात्कारलक्षणा, संज्ञातः ऋतम्भराप्रज्ञा । **प्रकल्पनं**=प्रकर्षेण विपर्यासराहित्येनोत्पादनम् । ततः परवैराग्यं, ततः **उत्तमयोगः**=असम्प्रज्ञातः समाधिरिति विवेकः ।

अयमेव निर्विकल्पः समाधिः सर्वकर्तव्यसीमत्वात्कैवल्यकामैः सर्वथोपादेयः । तस्मिन् सति निरुद्धं चित्तं सह निरोधसंस्कारैः स्वस्यां प्रकृतौ प्रविलीयते । प्रविलीने च तस्मिन् पुरुषः स्वरूपप्रतिष्ठः स्वेनात्मना परमात्मानं साक्षात्पश्यन्निव तत्स्वरूपानन्दमुपभुञ्जानो ब्रह्मभूतः शुद्धः केवलो मुक्त इत्युच्यते । **यत्रेदं** समाम्नातं भवति—

**"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३ । १ : ३) इति । तस्मादत्र सर्वथा यत्न आस्थेय इति शम् ।

**योगारम्भप्रतिज्ञानं लक्षणं साधनं तथा ।**
**सप्रकारो द्विधा योगः ख्यातिमध्योऽत्र वर्णितः ॥१॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां योगसूत्रवैदिकवृत्तौ समाधिपादः प्रथमः ॥ १ ॥



ओ३म्

# साधनपादः ।



ननु समाहितचित्तस्योत्तममध्यमाधिकारिणः प्रथमपादोक्तः सावान्तरप्रभेदः सफलो योगः सम्भवति, तस्य शुद्धचित्तत्वेन तदुपायभूतयोरभ्यासवैराग्ययोः सम्भवात्। मन्दाधिकारिणस्तु विक्षिप्तचित्तस्य व्युत्थितस्य चित्तशुद्ध्यभावान्न तौ योगोपायौ द्रागित्येव सम्भवतः। तत्कथमेष योगयुक्तो भवेदित्याशङ्क्य तस्याभ्यासवैराग्योः सम्पत्त्यर्थं विस्तरेण चित्तशुद्धिसाधनानि योगाङ्गानि प्रतिपिपादयिषुराचार्य्यो द्वितीयपादमारभमाणः पूर्वन्तावदुपयुक्ततरतयाऽल्पायाससाध्यं चित्तशुद्ध्युपायं क्रियायोगमुपदिशति—

**" तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" ॥ १ ॥**

**तपःस्वाध्यायेश्वरप्रणिधानानि** = द्वन्द्वसहनहितमिताशनादिकं =**तपः**, प्रणवादिपवित्राणां जपो मोक्षशास्त्राणाञ्च वेदोपनिषदामध्ययनं =**स्वाध्यायः**, सर्वकर्मणां परमगुरौ जगदीश्वरे समर्पणं तत्फलसंन्यासश्चेश्**वरप्रणिधानं**, तपश्च स्वाध्यायश्चे-

श्वरप्रणिधानञ्च तान्येतानि **क्रियायोगः**=क्रियात्मको योग इत्यर्थः ।

**यद्यपि** यमनियमादयः सर्वे क्रियायोग एव सन्ति । तथाप्येतानि त्रीणि प्रकृष्टानि केवलान्यप्यनुष्ठितानि चित्तशुद्धिं सम्पादयन्ति योगं साधयन्तीति व्युत्थितचित्तानुकम्पया पुरस्तात्तन्निर्देशः ॥ १ ॥

**ननु** किमर्थोऽयं क्रियायोगः ? **तत्राह**—

**"समाधिभावनार्थः क्लेशतनूकरणार्थश्च"** ॥ २ ॥

क्रियायोग इत्यनुवर्तते । **समाधिभावनार्थः**=पूर्वोक्तलक्षणस्य समाधेर्भावनं चित्तशुद्धिद्वारोत्पादनमर्थः प्रयोजनं यस्य, स तथा, **क्लेशतनूकरणार्थश्च**=समाधिप्रतिपक्षत्वेन ख्यातिप्रतिबन्धकानामविद्यादिक्लेशानां तनूकरणं सूक्ष्मीकरणं शिथिलीकरणं ख्यातिप्रतिबन्धाक्षमीकरणमिति यावत्, अर्थः प्रयोजनं यस्य, स तथाभूतश्च क्रियायोगो भवतीत्यर्थः ।

**क्रियायोगो** हि फलनैरपेक्ष्येण सेव्यमानोऽनादिक्लेशकर्मवासनाभ्यां चित्रां रजस्तमःसमुद्रेकलक्षणां पापाख्यामशुद्धिमपनयन्

चित्तैकाग्र्यलक्षणं समाधिं सम्पादयति, तत्प्रतिपक्षभूताविद्यादि-क्लेशाँश्च सूक्ष्मीकरोति, सूक्ष्मीकृतांश्च तान् पुनः प्रसंख्याना-ग्निना * दग्धबीजकल्पान् अप्रसवधर्मिणः करिष्यति । **तस्माद्** विक्षिप्तचित्तेन योगमारुरुक्षुणा समाधिभावनार्थं क्लेशानां तनूकरणार्थञ्चादौ क्रियायोगो यत्नतोऽनुष्ठेय इति भावः ॥२॥

**ननु** के ते क्लेशाः सन्ति येषां क्रियायोगेन तनूकरणमुपदिश्यते ? तत्राह —

**" अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः"** ॥ ३ ॥

**अविद्याऽस्मितारागद्वेषाभिनिवेशाः** = अविद्याचास्मिता च रागश्च द्वेषश्चाभिनिवेशश्च, ते तथा, वक्ष्यमाणलक्षणाः विपर्ययापरनामानः पञ्च **क्लेशाः**= कर्मतद्विपाकप्रवर्तकत्वेन क्लेशहेतुत्वात्क्लेशपदवाच्या इत्यर्थः ।

**इमे** हि क्लेशाः उदारावस्थामापन्नाः गुणाधिकारं द्रढयन्ति, तत्परिणामं चावस्थापयन्ति, जात्यायुर्भोगलक्षणं कर्मविपाकं च निष्पादयन्ति । तस्माद्यत्नेन तनूकर्तव्याः इत्युपदिष्टं वेदितव्यम् ॥ ३ ॥

**ननु** किमेषां मूलं ? तत्राह —

---

* प्रसंख्यानं विवेकख्यातिः ।

"अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" ॥४॥

**प्रसुप्ततनुविच्छिन्नोदाराणां**=प्रबोधकाभावाच्चेतसि शक्तिरूपेणावस्थिताः **प्रसुप्ताः**, क्रियायोगेनोपहतास्तनवः, सजातीयेन वा विजातीयेन वा समुदाचरता क्लेशान्तरेण विच्छेदम् अभिभवं प्राप्ताः **विच्छिन्नाः**, ते चैते त्रयो भविष्यद्वृत्तयः, विषयेषु लब्धवृत्तयः **उदाराः**, प्रसुप्ताश्च तनवश्च विच्छिन्नाश्चोदाराश्च, ते तथा, तेषां चतुर्विधभेदभिन्नानामुत्तरेषाम्=अस्मितारागद्वेषाभिनिवेशानां चतुर्णां **क्षेत्रं**=प्रसवभूमिः=मूलमविद्येत्यर्थः ।

**एते** चत्वारः अविद्यायां सत्यामुपलभ्यन्ते, क्षीयमाणायां चोपक्षीयन्ते, तस्मादेषां मूलमविद्येति भावः ।

**यद्यपि** पञ्चभेदभिन्नाः क्लेशाः । दग्धबीजभावरूपपञ्चमभेदस्यापि सत्वात् । तथापि न सोऽविद्यामूलको, नापि संसारहेतुरिति हातव्येषु तेषु न परिगणित इति ध्येयम् ।

**तत्र** विदेहप्रकृतिलयानां **प्रसुप्ताः**, क्रियायोगिनां **तनवः**, विषयसेविनां **विच्छिन्नोदाराः**, इति विवेकः ॥ ४ ॥

**प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम् ॥**
**विच्छिन्नोदाररूपाश्च क्लेशा विषयसंगिनाम् ॥१॥**

**ननु** केयमविद्या ? तत्राह—

**"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" ॥ ५ ॥**

ख्यातिः बुद्धिः ज्ञानमित्यनर्थान्तरम् । **अनित्याशुचिदुःखानात्मसु**=यथासंख्यमन्वयः, **नित्यशुचिसुखात्मख्यातिः**= अनित्ये नित्यत्वाभाववति कार्ये जगति नित्यख्यातिः नित्यत्व-बुद्धिः, अशुचौ शुचित्वाभाववति परमबीभत्से काये शुचिख्यातिः शुचित्वबुद्धिः, एतेनापुण्ये पुण्यख्यातिः, अनर्थे चार्थख्यातिरपि व्याख्याता, दुःखे सुखत्वाभाववति विषयभोगादौ सुखख्यातिः, अनात्मनि बुद्ध्यादौ पुत्रभार्य्यादौ चात्मख्यातिः **अविद्या**=विद्या विपरीता तदभाववति तत्प्रकारिका बुद्धिरित्यर्थः ।

**यद्यपि** शुक्तिरूप्यादिख्यातिभेदेनानेकपदाऽविद्या, तथाप्येषा चतुष्पदैव क्लेशसन्तानस्य सविपाकस्य च कर्माशयस्य मूलमिति न सा प्रदर्शितेति बोध्यम् ॥ ५ ॥

**अ**विद्यां लक्षयित्वा तत्कार्य्यभूतां रागादिहेतुत्वात्ततो वरिष्ठामस्मितां तावल्लक्षयति—

**"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" ॥ ६ ॥**

**दृग्दर्शनशक्त्योः**=दृक्शक्तिः पुरुषः, दर्शनशक्तिर्बुद्धिः, त-योरत्यन्तासंकीर्णयोरात्मानात्मनोर्यय**मेकात्मतेव**=पूर्वोक्तयाऽनात्म-

न्यात्मख्यातिलक्षणाविद्यया सम्पादिता धर्मतः स्वरूपतो नितान्तैकाकारतेव एकपदार्थतेवेति यावत्, सा अस्मितेत्यर्थः ।

तत्र बुद्धिपुरुषयोरेकात्मता न पारमार्थिकी, किन्त्वाविद्यकीति द्योतयितुमिवशब्दः । दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिपदमुपात्तमिति विवेकः ।

एतस्यामेवास्मितायां सत्यां पुरुषोऽहमस्मि सुखी दुःखी कर्ता भोक्तेत्यभिमन्यते । विवेकख्यात्या च भिद्यमानायां तस्यां मुक्तिपदमश्नुते । तां चैतामौपनिषदाः हृदयग्रन्थिं प्रब्रुवते । यत्रेदमाम्नातं भवति––

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे (मु. २।२।८)
इति ।

केवलेऽनात्मन्यात्मारोपः अविद्या, तन्निबन्धनः सुखदुःखादिविशिष्टे तस्मिन् तदारोपोऽस्मितेति विशेष इति विवरणकारः ॥ ६ ॥

क्रमप्राप्तमस्मिताविनाभूतं रागं लक्षयति––

"सुखानुशयी रागः" ॥ ७ ॥

अत्र सुखशब्दः सुखानुभवपरः, एवमग्रिमसूत्रे दुःखशब्दोऽपि दुःखानुभवपरो द्रष्टव्यः । **सुखानुशयी**=सुखात् सुखानुभवादनु पश्चाच्छयी सुखानुस्मृत्या सुखाभिज्ञस्य पुरुषस्य चेतसि शयनशीलस्तज्जातीयसुखतत्साधनविषयो योऽभिलाषापरपर्य्यायश्चित्तावृत्तिविशेषः स **रागः**=रागपदवाच्य इत्यर्थः ॥ ७ ॥

रागप्रतिद्वन्द्विनं द्वेषं लक्षयति—

**"दुःखानुशयी द्वेषः"** ॥ ८ ॥

**दुःखानुशयी**= दुःखात् दुःखानुभवादनु पश्चाच्छयी दुःखानुस्मृत्या दुःखाभिज्ञस्य पुरुषस्य चेतसि शयनशीलस्तज्जातीयदुःखतत्साधनविषयो यः क्रोधापरपर्यायश्चित्तावृत्तिविशेषः **सद्वेषः**=द्वेषपदवाच्य इत्यर्थः ॥ ८ ॥

अभिनिवेशं लक्षयति—

**"स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः"** ॥ ९ ॥

**स्वरसवाही**=प्राग्भवीयमरणदुःखानुभवजन्यो वासनासंघः स्वरसस्तेन रूपेणानिशं वहनशीलः **विदुषोऽपि तथा**=यथा मूढस्याविदुषस्तथा ज्ञानिनो विदुषोऽपि **रूढः**=प्रसिद्धो यः " मा न भूवं हि भूयासम्" इति मरणत्रासः, सोऽ**भिनिवेशः**=अभिनिवेशसंज्ञकः पञ्चमः क्लेश इत्यर्थः ।

न्यात्मख्यातिलक्षणाविद्यया सम्पादिता धर्मतः स्वरूपतो नितान्तैकाकारतेव एकपदार्थतेवेति यावत्, सा अस्मितेत्यर्थः ।

तत्र बुद्धिपुरुषयोरेकात्मता न पारमार्थिकी, किन्त्वाविद्यकीति द्योतयितुमिवशब्दः। दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिपदमुपात्तमिति विवेकः ।

एतस्यामेवास्मितायां सत्यां पुरुषोऽहमस्मि सुखी दुःखी कर्ता भोक्तेत्यभिमन्यते । विवेकख्यात्या च भिद्यमानायां तस्यां मुक्तिपदमश्नुते । तां चैतामौपनिषदाः हृदयग्रन्थिं प्रब्रुवते । यत्रेदमाम्नातं भवति—

**"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे (मु॰ २।२।८)**
**इति ।**

केवलेऽनात्मन्यात्मारोपः अविद्या, तन्निबन्धनः सुखदुःखादिविशिष्टे तस्मिन् तदारोपोऽस्मितेति विशेष इति विवरणकारः ॥ ६ ॥

क्रमप्राप्तमस्मिताविनाभूतं रागं लक्षयति—

**"सुखानुशयी रागः" ॥ ७ ॥**

अत्र सुखशब्दः सुखानुभवपरः, एवमग्रिमसूत्रे दुःखशब्दोऽपि दुःखानुभवपरो द्रष्टव्यः । **सुखानुशयी**=सुखात् सुखानुभवादनु पश्चाच्छयी सुखानुस्मृत्या सुखाभिज्ञस्य पुरुषस्य चेतसि शयनशीलस्तज्जातीयसुखतत्साधनविषयो योऽभिलाषापरपर्य्यायश्चित्तवृत्तिविशेषः स **रागः**=रागपदवाच्य इत्यर्थः ॥ ७ ॥

रागप्रतिद्वन्द्विनं द्वेषं लक्षयति—

**"दुःखानुशयी द्वेषः"** ॥ ८ ॥

**दुःखानुशयी**= दुःखात् दुःखानुभवादनु पश्चाच्छयी दुःखानुस्मृत्या दुःखाभिज्ञस्य पुरुषस्य चेतसि शयनशीलस्तज्जातीयदुःखतत्साधनविषयो यः क्रोधापरपर्यायश्चित्तवृत्तिविशेषः **सद्वेषः**=द्वेषपदवाच्य इत्यर्थः ॥ ८ ॥

अभिनिवेशं लक्षयति—

**"स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः"** ॥ ९ ॥

**स्वरसवाही**=प्राग्भवीयमरणदुःखानुभवजन्यो वासनासंघः स्वरसस्तेन रूपेणानिशं वहनशीलः **विदुषोऽपि तथा**=यथा मूढस्याविदुषस्तथा ज्ञानिनो विदुषोऽपि **रूढः**=प्रसिद्धो यः "मा न भूवं हि भूयासम्" इति मरणत्रासः, सो**ऽभिनिवेशः**=अभिनिवेशसंज्ञकः पञ्चमः क्लेश इत्यर्थः ।

अत्र "**विद्वान्**" शास्त्रज्ञः इति वाचस्पतिमिश्राः, "तत्त्वज्ञः" इति वार्तिककृतः ।

ते चैते पञ्च क्लेशाः प्रकरणान्तरेषु यथासंख्यं तमो-मोह-महामोहतामिस्रान्धतामिस्रा इत्याख्यायन्ते ।

**तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः ।**
**अविद्या पञ्चपर्वैषा सांख्ययोगेषु कीर्तिता ॥ १ ॥**

द्वाषष्ठिरवान्तरभेदाश्चैतेषां सांख्यदर्शने पञ्चमाध्याये एकाधिकचत्वारिंशसूत्रे निरूपिता इत्यध्यवसेयम् ॥ ९ ॥

ननु क्रियायोगेन तनूकृता अपि क्लेशाः कथं हेयाः स्युः ? तत्राह–

**"ते प्रतिप्रसवहेयाः सूक्ष्माः" ॥ १० ॥**

ते=पूर्वोक्ताः पञ्च क्लेशाः **सूक्ष्माः**=मैत्र्यादिभावनासहकृतेन क्रियायोगेन तनूकृताः पश्चात्प्रसंख्यानाग्निना च दग्धबीजभावाः सन्तः **प्रतिप्रसवहेयाः** = कृतभोगापवर्गस्य चित्तस्य स्वकारणे प्रकृतौ लयः प्रतिप्रसवस्तेन हेयाः हातव्याः भवन्तीत्यर्थः ।

क्रियायोगेन तनूकृतानां पुनर्विवेकख्यात्या च दग्धबीजभावानां क्लेशानां हानाय नान्यत्किञ्चिदपेक्षणीयमस्ति । केवलमस-

म्प्रज्ञातयोगोऽपेक्षणीयः । तेन निरुद्धे चेतसि तदाश्रयक्लेशानां स्वयं निरोधोपपत्तेरिति भावः ॥ १० ॥

**ननु** सूक्ष्माः क्लेशाः विवेकख्यात्या दग्धबीजभावाः सन्तः प्रतिप्रसवहेया भवन्तु, बीजभावोपगतानामदग्धानां तु तेषां स्वविषयवृत्तयः कथं हेया भवेयुः ? तत्राह—

**"ध्यानहेयास्तद्वृत्तयः"** ॥ ११ ॥

**तद्वृत्तयः**= तेषां बीजभावोपगतानामदग्धानां क्लेशानां वृत्तयः स्थूलाः वृत्तयः उदाराः अवस्था इति यावत्, क्रियायोगेन तनूकृताः सत्यो **ध्यानहेयाः**=ध्यानं प्रसंख्यानं तेन हेयाः हातव्याः दग्धबीजभावाः कर्तव्या इत्यर्थः ।

**चतुरवस्थाः** क्लेशा इत्युक्तं । तत्र ये तावदुदारावस्थाः स्थूलाः क्लेशाः विच्छिद्याविर्भूता वाऽविच्छिद्याविर्भूता वा, ते सर्वे क्रियायोगेन प्रतिपक्षेण पूर्वं तनूकर्तव्याः । तनूकृताश्च ते शुष्केन्धनकल्पाः पश्चात्प्रसंख्यानाग्निना दग्धबीजभावाः विधातव्याः । दग्धबीजभावास्तु पुनः प्रतिप्रसवेन निर्बीजयोगेन हातव्या इति सूत्रद्वयेनोपदिष्टं वेदितव्यम् ॥ ११ ॥

**ननु** कस्मात्ते हेयाः क्लेशाः ? तत्राह—

**"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" ॥ १२ ॥**

यत इति शेषः । यतो **दृष्टादृष्टजन्मवेदनीयः**= वर्तमानं जन्म दृष्टं जन्म, भविष्यज्जन्म अदृष्टं जन्म, तयोर्वेदनीयो भोग्यः **कर्माशयः**=शुभाशुभकर्मानुष्ठानजन्यः पुण्यपापात्मक आशयः **क्लेशमूलः**=पूर्वोक्तलक्षणाः अविद्यादयः क्लेशाः मूलं निमित्तमुत्पादे कार्य्यकरणे च यस्य, स तथेत्यर्थः ।

क्लेशेषु सत्सु दृष्टादृष्टजन्मवेदनीयः कर्माशयो भवति, नासत्सु । सोऽयं मा भूदिति हेयाः क्लेशा इति भावः ।

**तत्र** तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तितः ईश्वरदेवमहर्षिमहानुभावानामाराधनाद्वा परिनिष्पन्नः पुण्यकर्माशयः, तीव्रक्लेशेन भीतव्याधितकृपणेषु-विश्वासोपगतेषु वा महानुभावेषु तपस्विषु वा कृतः पुनःपुनरपकारः पापकर्माशयो दृष्टजन्मवेदनीयः, तद्भिन्नश्चादृष्टजन्मवेदनीय इति विवेकः ।

दुःखमयजन्मनां नारकाणां दृष्टजन्मवेदनीयः क्षीणक्लेशानां चादृष्टजन्मवेदनीयः कर्माशयो न भवतीत्यपि मनसि धरणीयम् ॥ १२ ॥

ननु क्लेशानां हानेऽपि तन्मूलकस्यानादिभवपरम्परास-

ञ्चितकर्माशयस्यानन्तत्वात्तद्विपाको भविष्यत्येवेति किं नो भवताऽपि तेन ? तत्राह—

**" सति मूले तद्विपाको जात्यायुर्भोगाः " ॥ १३ ॥**

**मूले**=क्लेशात्मके कर्माशयस्य मूलकारणे **सति**=सत्येव **जात्यायुर्भोगाः**=जातिः जन्म, आयुः जीवनकालः, भोगः सुखदुःखात्मकविषयाणामनुभवः, तल्लक्षण**स्तद्विपाकः**=तस्य कर्माशयस्य विपाको विपच्यते कर्मभिः साध्यत इति विपाकः फलं भवतीत्यर्थः ।

अनुच्छिन्नमूलः कर्माशयो विपाकारम्भी भवति, न विवेकख्यात्युच्छिन्नमूलोऽनन्तोऽपि । "छिन्ने मूले नैव पत्रं न शाखा" इति न्यायादिति भावः ।

तत्र मुख्यो विपाको भोगः, जात्यायुषी तु तच्छेषत्वाद्गौणे इति विवेकः ॥ १३ ॥

**ननु** पुण्यापुण्यकर्माशयमूलत्वात्क्लेशाः हेया भवन्तु, कर्माशयविपाकाः जात्यायुर्भोगाः पुनः कस्य मूलं, येनामी हेयाः स्युः ? तत्राह—

**"ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्" ॥१४॥**

**ते**=जात्यायुर्भोगाः **ह्लादपरितापफलाः**=सुखं ह्लादः,दुःखं परितापः, ह्लादश्च परितापश्च तौ फले येषां, ते तथा, सुख-दुःखयोर्मूलमिति यावत्, कुतः ? **पुण्यापुण्यहेतुत्वात्**=पुण्यं धर्मः, अपुण्यमधर्मस्तद्धेतुकत्वादित्यर्थः ।

पुण्यहेतुकाः सुखस्य, अपुण्यहेतुकाश्च दुःखस्य मूलमिति भावः ॥ १४ ॥

**नन्वेवं** तर्हि दुःखफलास्ते हीयेरन्, न सुखफलाः ? तत्राह-

**" परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"** ॥ १५ ॥

**विवेकिनः**=सुखदुःखविवेकं कुर्वतो भगवतो योगिनः **सर्वं**=सकलं दृष्टानुश्रविकविषयजं सुखं **दुःखमेव**= प्रतिकूलवेदनीयमेवास्ति, नानुकूलवेदनीयम्, तत्र हेतुः **परिणामतापसंस्कारदुःखैः**=परिणामश्च तापश्च संस्कारश्च, त एव दुःखानि तैः--इत्थम्भूतलक्षणे तृतीया, परिणामादिदुःखत्रयज्ञाप्यदुःखतानुविद्धत्वादिति यावत्, हेत्वन्तरमाह-**गुणवृत्तिविरोधाच्च**=द्वितीयोऽयं हेतुरिति सूचनाय चशब्दः, सुखप्रत्ययहेतुषु चित्तरूपेण परिणतेषु सत्त्वरजस्तमस्सु गुणेषु वर्तमानो विरोधो गुणवृत्तिविरोधस्तस्माच्च प्रख्याप्रवृत्तिस्थिति-शीलत्वेन परस्परविरुद्धगुणमयपरिणामत्वाच्चेत्यर्थः ।

यस्तावच्चेतनाचेतनसाधनाधीनः सर्वस्य सुखानुभवः, स चास्ति सर्वो रागानुविद्धः, नहि सम्भवति न तत्र रज्यति तच्च तस्य सुखमिति । रागस्य च प्रवृत्तिहेतुत्वात्प्रवृत्तेश्च पुण्यापुण्योपचयकारित्वादस्ति तत्र रागजस्त्रिविधः कर्माशयः--मानसो वाचिकः कायिकश्चेति सुखार्थं मया विहितं निषिद्धं चैतदनुष्ठेयमिति सङ्कल्पकृतो मानसः, वचनकृतो वाचिकः, नानुपहत्य भूतानि भोगः सम्भवतीति हिंसाकृतः कायिकः । एवं सुखमनुभवँस्तत्र सक्तो विच्छिन्नावस्थेन द्वेषेण द्वेष्टि सुखविच्छेदकानि दुःखसाधनानि, तानि परिहर्तुमशक्तो मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति रागवत्प्रत्येकं त्रिविधः कर्माशयः, ततश्च दुःखमिति परिणामदुःखम् । तथा सुखानुभववेलायां मम कदापि सुखविच्छेदो मा भूदिति तत्प्रतिकूलानि साधनानि विद्विषन् सन्तप्तचित्तस्तत्परिजिहीर्षया कायेन वाचा मनसा परिस्पन्दत इति भवति द्वेषजस्त्रिविधः कर्माशयः । तानि परिहर्तुमशक्तो मुह्यति चेति भवति मोहजस्त्रिविधः कर्माशयः । एवं सुखानुरक्तस्तत्साधनानि प्रार्थयमानः परमनुगृह्णात्युपहन्ति चेति भवति रागजस्त्रिविधः कर्माशयः । ततश्च दुःखमिति तापदुःखम् । एवं सुखानुभवे सति तद्विषयः संस्कारः, ततश्च स्मृतिः, ततश्च रागः, ततश्च मनोवाक्कायप्रवृत्तिः, ततश्च कर्माशयः, ततश्च दुःखानुभवः, ततश्च पुनः संस्कारः, पुनः स्मृतिः, पुना रागः, पुनः प्रवृत्तिः, पुनः कर्माशयः, पुनर्दुःखमिति संस्कारचक्रेणानुवर्तमानं दुःखानन्त्यं

संस्कारदुःखम् । तदनेन दुःखत्रयेणानुविद्धत्वादौपाधिकं विषयसुखस्य दुःखत्वम् । तथा प्रख्याप्रवृत्तिस्थितिशीलाः गुणाः विरुद्धस्वभावा अपि परस्परानुग्रहतन्त्रीभूत्वा तैलवर्त्यग्नय इव दीपं पुरुषार्थप्रयुक्तत्वेन प्रत्येकं शान्तघोरमूढात्मकं कार्य्यमारभन्ते । तत्र चैकस्य प्राधान्ये द्वयोर्गुणभावात् प्रधानमात्रव्यपदेशेन सात्त्विकं राजसं तामसमिति त्रिगुणं सदपि कार्य्यमेकेन गुणेन व्यपदिश्यते । अत एवोद्भूतसत्त्वगुणकार्य्यत्वे सत्यप्यनुद्भूतरजस्तमःकार्य्यत्वात्सुखप्रत्ययोऽपि तत्र त्रिगुणात्मक एव बोभूयते । यत्कारणं वृत्त्यतिशया एव परस्परं विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्तन्त इति । तथाच सुखात्मकत्ववद् दुःखात्मकत्वं मोहात्मकत्वमपि कार्य्यस्य तस्य सुखप्रत्ययस्य सुध्रुवम् । एवं दुःखमोहमयत्वे सत्यपि चलं च गुणवृत्तमिति द्रागित्येव विरोधिना प्रत्ययान्तरेणाभिभवसम्भवादस्थिरं च विषयजं सर्वं सुखमिति गुणवृत्तिविरोधाच्च स्वरूपतोऽपि विषयसुखस्य दुःखत्वमिति भावः ।

तत्र भविष्यद् दुःखं परिणामदुःखं, भविष्यच्च वर्तमानं च दुःखं तापदुःखं, संस्कारानन्त्येन जायमानं भविष्यद्दुःखं संस्कारदुःखमिति विवेकः—

**मधुसूदनस्वामी तु** 'पूर्वमुद्भूतः सन् राग एव विषयप्राप्त्या

सुखरूपेण परिणमते, तस्य च रागस्य प्रतिक्षणं वर्द्धमानत्वेन स्ववि-षयाप्राप्तिनिबन्धनदुःखस्यापरिहार्य्यत्वाद् दुःखरूपतैवेति भूतदुःखं परिणामदुःखं, वर्तमानदुःखं तापदुःखं, भविष्यद्दुःखं संस्कारदुःख-मिति कालत्रयेऽपि विषयसुखमुपाधितः स्वरूपतश्च दुःखमेव वि-वेकिनः' इति व्याचख्यौ ।

**तथाच** मूढदृष्ट्या सुखफला अपि जात्यायुर्भोगाः विवेकि-दृष्ट्या दुःखफला एवेति यत्नतो हेयः क्लेशमूलोऽयं गुणपरिणामो दुःखमयः संसारो जात्यायुर्भोगलक्षण इति निष्कर्षः ॥ १५ ॥

निरूपितः शास्त्रार्थः

**तदेवं** संक्षेपेण निरूपितं शास्त्रार्थं हेयं, हेयहेतुः, हानं, हानो-पायश्च, इति चतुर्भिर्व्यूहैः पुनर्विस्तरेण निरूपयिष्यन्नाचार्य्यः पूर्वं तावद्धेयपदार्थं निरूपयति—

**"हेयं दुःखमनागतम्"** ॥ १६ ॥

**अनागतं**=भूतस्योपभोगेनातिवाहितत्वाद्वर्तमानस्य च भोगारूढत्वेन णान्तरे, तद्धानस्यावश्यम्भावित्वात्परिशिष्टमनागतवृत्तिकं **दुःखं**=त्रिविधं संसारदुखं **हेयं**=हातव्यमित्यर्थः ॥ १६ ॥

**ननु** हेयस्यास्य को हेतुः ? **तत्राह**—

**"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" ॥ १७ ॥**

**द्रष्टृदृश्ययोः**=बुद्धेः प्रतिसंवेदी पुरुषो द्रष्टा, बुद्ध्यादिरूपेण परिणता गुणत्रयात्मिका प्रकृतिर्दृश्यं, तयोर्यः **संयोगः**=अविद्याकृतोऽनादिः स्वस्वामिभावलक्षणः परस्परसम्बन्धः, स **हेयहेतुः**=हेयस्य संसारदुःखस्य हेतुः कारणमित्यर्थः ।

वासनारूपेणाविद्यायाः अनादित्वात्तत्कृतः सम्बन्धोऽप्यनादिरिति न कश्चिद्दोष इति बोध्यम् ॥ १ ॥

**ननु** किंस्वरूपं दृश्यं ? तत्राह —

**"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं**
**भोगापवर्गार्थं दृश्यम्" ॥ १८ ॥**

**भोगापवर्गार्थं**= सुखदुःखात्मकविषयानुभवो भोगः, अपवृज्यतेऽनेनेति विवेकख्यातिरपवर्गः, भोगश्चापवर्गश्च तावर्थौ प्रयोजने यस्य तत्तथा, **भूतेन्द्रियात्मकं**=पृथिव्यादितन्मात्रान्तानि स्थूलसूक्ष्मभूतानि भूतानि, श्रोत्रादिमहत्तत्त्वान्तानि स्थूलसूक्ष्मेन्द्रियाणि इन्द्रियाणि, तानि च भूतेन्द्रियाणि आत्मा स्वाभिन्नः परिणामो यस्य तत्तथा, **प्रकाशक्रियास्थितिशीलं**=बुद्ध्यादिवृत्तिरूपालोको भौतिकालोकश्च प्रकाशः, यत्नश्चलनं च क्रिया, प्रकाशक्रिययोः

प्रतिबन्धः स्थितिः, प्रकाशश्च क्रिया च स्थितिश्च ताः शीलं स्वभावो यथाक्रमं यस्य सत्त्वादिगुणत्रयस्य तत्तथाभूतं यद् गुणत्रयं तद् दृश्यमित्यर्थः ।

भोगापवर्गप्रयोजनवद् यद् ग्राह्यग्रहणात्मकं गुणत्रयं प्रकृतिस्तद् दृश्यमिति भावः ।

**यद्यपि** प्रधानशब्दवाच्यं गुणत्रयं पुरुषस्य भोगापवर्गार्थमेव बुद्धिरूपेण परिणमते । **तथापि** तौ भोगापवर्गौ पुरुषे न वास्तवौ । तस्य बद्धमुक्तशीलत्वेऽपि स्वरूपतस्तथात्वानभ्युपगमात् । किन्तु बुद्धावेव वर्तमानौ तौ तस्मिन् व्यपदिश्येते यथा योद्धृषु वर्तमानौ जयपराजयौ तत्स्वामिनि नरेन्द्रे । स हि तत्फलस्यानुभविता । बुद्धेश्च पुरुषार्थापरिसमाप्तिरेव परमो बन्धस्तदर्थावसायश्च मोक्ष इति द्रष्टव्यम् ।

यथा भोगापवर्गौ पुरुषेऽध्यारोपितसद्भावौ, तथा ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा अपि बुद्धौ वर्तमानास्तस्मिन्नध्यारोपितसद्भावाः समधिगन्तव्याः ॥ १८ ॥

पुनर्दृश्यस्वरूपावधारणार्थं तदवस्थाभेदं निरूपयति—

**"विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि" ॥१९॥**

**विशेषाविशेषलिङ्गमात्रालिङ्गानि**= आकाशादीनि स्थूलभूतानि पञ्च, श्रोत्रादीनि बुद्धीन्द्रियाणि पञ्च, वागादीनि कर्मेन्द्रियाणि पञ्च, मनश्चोभयेन्द्रियमेकमिति षोडश विकाराः विशेषाः १ तत्त्वञ्च शान्तघोरमूढतालक्षणविशेषधर्माक्रान्तत्वम्। आकाशादीनां कारणानि परेण सह स्वात्मना यथाक्रममेकद्वित्रिचतुष्पञ्चलक्षणानि शब्दस्पर्शरूपरसगन्धतन्मात्राणि पञ्च, श्रोत्रादीनामेकादशेन्द्रियाणां कारणमहङ्कारश्चैक इति षडविशेषाः २ तत्त्वं च शान्तघोरमूढतालक्षणविशेषधर्मशून्यत्वे सति विकारकारणत्वम्। तन्मात्राणामहंकारस्य च कारणं महत्तत्त्वं लिंगमात्रं, तत्कारणं त्रिगुणात्मकं प्रधानमलिङ्गं, न लयं गच्छतीति तद्व्युत्पत्तेः, विशेषाश्चाविशेषाश्च लिंगमात्रं चालिङ्गं च तान्येतानि चत्वारि **गुणपर्वाणि**=गुणानां सत्त्वरजस्तमसां दृश्यानां पर्वाणीव पर्वाणि—अवस्थाविशेषा इत्यर्थः।

तत्र गुणानां साम्यावस्था प्रधानम्। प्रकृतिः प्रधानम्, अव्यक्तमित्यनर्थान्तरम्। विषमावस्थाश्च विशेषाविशेषलिङ्गमात्राणीति विवेकः।

तन्मात्राणि पञ्चाहङ्कारस्य कार्य्याणि इति सङ्ख्याः, अहङ्कारानुजानि महत्तत्वापत्यानि इति योगा इति प्रक्रियाभेदः॥ १९॥

सात्वस्थं दृश्यस्वरूपं प्रदर्श्य द्रष्टृस्वरूपं प्रदर्शयति—

**"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः"** ॥२०॥

**दृशिमात्रः**=धर्मधर्मिभावनिरासार्थं मात्रग्रहणं, दृशिर्ज्ञानं तत्स्वरूप एव यः पुरुषः स द्रष्टा । **ननु** दृशिमात्रः कथं द्रष्टा स्याद् दृष्टयाश्रयस्यैव द्रष्टृत्वात्? अतो विशिनष्टि **शुद्धोऽपि**=ज्ञानानाश्रयोऽपि **प्रत्ययानुपश्यः**=बौद्धप्रत्ययमनुसृत्य पश्यतीति प्रत्ययानुपश्यो बुद्धौ प्रतिबिम्बतत्वेन तत्समानाकारमापन्नो विवेकाभावाच्छब्दादीन् पश्यन्तीभिस्तद्बुद्धिवृत्तिभिरेवात्मनि समारोपिताभिः पश्यन्निव दृष्ट्याश्रय इव भवतीत्यर्थः ।

दृशिमात्रस्य पुरुषस्य स्वरूपतो द्रष्टृत्वाभावेऽपि बुद्धिवृत्त्यविशिष्टवृत्तित्वेनारोपितं निखिलदृश्यद्रष्टृत्वमस्त्येव । तेन शुद्धोऽपि प्रत्ययानुपश्यो यो दृशिमात्रः पुरुषः, स द्रष्टेति भावः ।

अत्र मात्रशब्देन पूर्वसूत्रोक्तप्रकाशक्रियादिगुणव्यावृत्तिः शुद्धशब्देन च भूतेन्द्रियात्मकत्वव्यावृत्तिरिति वार्तिककृतः॥२०॥

द्रष्टृदृश्ययोः स्वरूपं प्रदर्शितम् । संप्रति स्वस्वामिभावाख्यतत्सम्बन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वमाह—

"तदर्थ एव दृश्यस्यात्मा" ॥ २१ ॥

**तदर्थ एव**=दृश्यार्थत्वव्यवच्छेदायैवकारः—तस्य द्रष्टुः पुरुषस्यार्थः भोगापवर्गलक्षणं प्रयोजनं यस्येति व्यधिकरणबहुव्रीहिसमासः, स तथाभूत एव **दृश्यस्य**= पूर्वोक्तलक्षणस्य दृश्यस्यात्मा= स्वरूपमित्यर्थः ।

पुरुषार्थमेव दृश्यं, नात्मार्थमिति भावः ॥२१॥

**नन्वेवं** तर्हि द्रष्टुः प्रयोजने निष्पन्ने निष्प्रयोजनं दृश्यं नश्येत्, संसारश्चोच्छिद्येत ? तत्राह—

"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" ॥२२॥

**तत्**=बुद्धिरूपेण परिणतं गुणत्रयात्मकं दृश्यं प्रधानं **कृतार्थं प्रति**=कृतो भोगापवर्गलक्षणोऽर्थो यस्य पुरुषस्य तं प्रति **नष्टमपि**= नाशं प्राप्तमप्य**नष्टं**=सामान्यतो न नष्टम् , कुतः ? **अन्यसाधारणत्वात्**=कृतार्थवदकृतार्थं प्रत्यपि समानत्वादित्यर्थः ।

गुणत्रयात्मिका प्रकृतिर्ह्येका, पुरुषाश्च नाना । सा चेश्वराज्ञया सर्वान् प्रत्यविशेषेण भोगापवर्गार्थं प्रवर्तते । यस्य तु भोगापवर्गौ तया निष्पादितौ, तं प्रति कृतार्थत्वान्नष्टाऽपि नान्यान् प्रति नष्टा भवितुमर्हति । कृतार्थत्वाभावात् । अतः कस्यचिदेकस्य मुक्तौ सत्यामपि न सर्वसंसारोच्छेद इति भावः ।

+ सुखदुःखे ज्ञात्याः ... इति सुखदुःखिनी । ... स्वरूपनिः ।




नाशश्चात्र कृतार्थं प्रति कार्य्यानारम्भणमात्रं, न तु तत्त्वतो नाशः । अनादित्वाभ्युपगमादिति बोध्यम् ॥ २२ ॥

"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" (२–१७) इत्युक्तम् । तत्र द्रष्टृदृश्ययोः स्वरूपमभिधाय संयोगस्वरूपमभिधत्ते—

**"स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः" ॥२३॥**

**स्वस्वामिशक्त्योः**=बुद्धिरूपेण परिणता भोगापवर्गवती दृश्या प्रकृतिः स्वशक्तिः, द्रष्टा पुरुषः स्वामिशक्तिः, तयोः **स्वरूपोपलब्धिहेतुः**=स्वरूपस्योपलब्धौ साक्षात्कारे हेतुः कारणं यः स्वस्वामिभावलक्षणः सम्बन्धः स **संयोगः**=संयोगपदार्थः इत्यर्थः ।

द्रष्ट्रर्थं हि दृश्यम् । ततो दृश्यजनितोपकारं भोगापवर्गलक्षणं भजमानः पुरुषः स्वामी, स्वं च दृश्यम् । तयोर्बुद्ध्यादितो विविक्तस्य द्रष्टुः स्वामिनः स्वरूपस्योपलब्धिरपवर्गः । शब्दाद्याकारेण परिणतायाः सुखदुःखवत्याः बुद्धिप्रकृतेः स्वरूपस्याविवेकाद् द्रष्टृकर्मतयोपलब्धिर्भोगः । तद्धेतुभूतो यः स्वस्वामिशक्त्योर्बुद्धिपुरुषयोः स्वस्वामिभावलक्षणो वा, भोग्यभोक्तृभावलक्षणो वा, दृश्यद्रष्टृभावलक्षणो वा सम्बन्धः, स संयोग इति भावः ।

यश्चायं भोगापवर्गहेतुः प्रकृतिपुरुषसंयोगः, स न घटपटयो-

रिव संयोगविशेषः, किन्तु योग्यतालक्षणः । भवति दृश्यनिष्ठा जडत्वविषयत्वलक्षणा भोग्यत्वयोग्यता, द्रष्टृनिष्ठा च चेतनत्वलक्षणा भोक्तृत्वयोग्यता, यस्याः सूचनाय सूत्रे शक्तिपदमुपात्तम् । सोऽयं योग्यतालक्षणः संयोगोऽनादिविपर्य्ययज्ञानवासनाप्रभवतयाऽनादिः सन्नपि नानन्तः, किन्तु मध्ये निमित्तापायादपायशीलः । निमित्तापायश्च सम्यग्दर्शनादेव, नोपायान्तरात् । यतः सम्यग्दर्शनमेव विपर्य्ययदर्शनस्य प्रतिद्वन्द्वीति द्रष्टव्यम् ॥ २३ ॥

**ननु** किन्निमित्तोऽयं भोगापवर्गहेतुर्बुद्धिपुरुषयोः संयोगः ? **तत्राह**

**" तस्य हेतुरविद्या "** ॥ २४ ॥

अविद्या, विपर्य्ययज्ञानं, मिथ्याज्ञानं, भ्रान्तिज्ञानम्, अज्ञानम्, अविवेको, भ्रम इत्यनर्थान्तरम् । **तस्य** = संयोगस्य **हेतुः** = निमित्तम**विद्या** = अनादिवासनयाऽनुवर्तमानं पूर्वोक्तलक्षणं तमःसंज्ञं विपर्य्ययज्ञानमित्यर्थः ॥ २४ ॥

**एवं** हेयं, हेयकारणं, संयोगं च, सनिमित्तमुपपाद्य हानमुपपादयति—

**"तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् "** ॥२५॥

**तदभावात्**=तस्या विपर्ययज्ञानरूपाया अविद्यायाः **अभा-**

**वात्** सम्यग्दर्शनरूपया विवेकख्यातिसंज्ञया विद्यया नाशाद् **यः संयोगाभावः** = निमित्तापाये नैमित्तिकस्याप्यपाय इति बुद्धि-पुरुषयोः संयोगस्याभाव आत्यन्तिको नाशः तद् **हानं** = हान-शब्दाभिधेयम् , **तत्** = तदेव हानं **दृशेः**=ज्ञानस्वरूपस्य पुरुषस्य **कैवल्यं** = निःश्रेयसमित्यर्थः ।

**यद्यपि** पुरुषो बद्ध्यते, मुच्यते च, **तथापि** न तस्य स्वरूपतो बन्धो वर्तते। सर्वदा बन्धप्रसक्तेः । अतोऽविद्यानिमित्तो दुःख-हेतुर्बुद्धिगुणसंयोग एव तस्य बन्धः । सम्यग्दर्शनेनाविद्यानिवृत्तौ संयोगनिवृत्तेर्दृश्यैर्बुद्धिगुणैरसंयोगश्च मोक्षो, नान्यः कश्चित्स्वरूपातिशयः। दुःखनिवृत्तिस्तु संयोगनिवृत्तिनान्तरीयकी। दुःख निवृत्तिनान्तरीयकी च ब्रह्मानन्दोपभुक्तिरिति संयोगोपरमो हानं तदेव च कैवल्यमिति भावः ॥ २५ ॥

नन्वस्य हानस्य कः प्राप्त्युपायः ? तत्राह–

**" विवेकख्यातिरविप्लवा हानोपायः "** ॥ २६ ॥

**अविप्लवा**=सवासनमिथ्याज्ञानकालुष्यं विप्लवः, स न विद्यते यस्याः सा तथा निवृत्तसवासनमिथ्याज्ञानकालुष्या नितान्त-निर्मला **विवेकख्यातिः**=द्रष्टृदृश्यभेदभिन्ना साक्षात्कारात्मिका

बुद्धिवृत्तिर्धर्ममेघनामा सत्त्वपुरुषान्यताप्रत्यय इति यावत्, **हानोपायः**=हानस्य कैवल्यस्योपायः कारणमित्यर्थः ।

'विवेकख्यातिर्हानोपाय इति वक्तव्ये साक्षात्कारनिष्ठारूपत्वलाभायाविप्लवेति ख्यातिविशेषणम्' इति वार्तिककृतः । 'मध्ये द्वारताप्रदर्शनार्थं विशेषणम्' इति विवरणकारः ।

**आ**चार्य्योपदेशेन विवेकं गृहीत्वा मननेन च व्यवस्थाप्य दीर्घकालनैरन्तर्य्यसत्कारासेवितायाः भावनायाः प्रकर्षाज्जायमाना साक्षात्काररूपिणी समाधिप्रज्ञा स्वविषयेण परवैराग्येण प्रतिप्रसवार्थं क्रियायोगादितस्तनूकृतं सवासनं मिथ्याज्ञानं दग्धबीजभावं नयन्ती निर्विप्लवा हानस्योपाय इति भावः ।

**तत्र** विवेकख्यात्या सवासनमिथ्याज्ञाननाशः, ततो द्रष्टृदृश्यसंयोगनाशः, ततश्च दुःखत्रयहानरूपं कैवल्यमिति क्रमः॥२६॥

**ननु** विवेकख्यातिनिष्ठस्य भगवतो योगिनः पुनः किं भवति ? तत्राह—

**"तस्य सप्तधा प्रान्तभूमिः प्रज्ञा"** ॥ २७ ॥

**तस्य**=प्रत्युदितख्यातेर्वर्तमानविवेकख्याते राजसतामसप्रत्ययान्तरानुत्पादे सति निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य भगवतो

धर्ममेघयोगिन इति यावत्, **सप्तधा**=विषयभेदात्सप्तप्रकारा जिज्ञासा-जिहासा-प्रेप्सा-चिकीर्षा-शोक-भय-विकल्प-निवृत्तिफला **प्रान्तभूमिः**= प्रकृष्टोऽन्तः फलतोऽवसानं यासां भूमीनामवस्थानां तास्तथोक्ताः, यतः परमन्यः सम्प्रकर्षो नास्तीति भावः, प्रान्ताः भूमयो यस्याः प्रज्ञायाः सा तथा **प्रज्ञा**=बुद्धिर्भवतीत्यर्थः ।

तत्र 'परिज्ञातं हेयं, न पुनरस्य हेयस्य किञ्चित्परिज्ञेयमस्ति १, हताः हेयहेतवः अविद्यादयः पञ्च क्लेशाः, न पुनरेतेषां किंचिद्धातव्यमस्ति २, प्राप्तं हानं, न पुनरन्यत्किंचित्प्राप्तव्यमस्ति ३, निष्पादितो विवेकख्यातिरूपो हानोपायो, न पुनरन्यत्किंचिन्निष्पादनीयमस्ति ४, इत्येषा चतुष्टयी कर्तव्यसमाप्तिरूपत्वात्कार्यविमुक्तिसंज्ञा प्रज्ञा, कृतार्थं मे बुद्धिसत्त्वं १, बुद्धिरूपेण परिणताः गुणा अपि गिरिशिखरच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रकृतौ प्रलयाभिमुखाः सह बुद्धिसत्त्वेनात्यन्तिकं लयं गच्छन्ति, न चैषामस्ति पुनरुत्पादः, प्रयोजनाभावात् २, तत्र गुणातीतः स्वरूपमात्रावस्थितश्चिदेकरसः केवली पुरुषः परमात्मनोपसम्पत्स्यते ३, इत्येषा त्रयी चित्ताद्विमुक्तिरूपत्वाच्चित्तविमुक्तिसंज्ञा प्रज्ञेति सप्तविधप्रज्ञाविवेकः ।

एतत्सप्तविधप्रान्तभूमिप्रज्ञावानेव पुरुषो निर्विकल्पो जीवन्मुक्तः कुशल इत्याख्यायत इति निश्चेतव्यम् ॥ २७ ॥

**ननु** कस्यानुष्ठानादेषाऽविप्लवा विवेकख्यातिर्हानोपायो निष्पद्यते ? तत्राह—

**"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः" ॥ २८ ॥**

**योगाङ्गानुष्ठानात्**=अष्टौ अभिधास्यमानानि योगसाधनानि योगाङ्गानि, तेषामनुष्ठानात् यथाविधि संपादनाद**शुद्धिक्षये**=पुण्यपापाभ्यां सह पञ्चपर्वाविद्यारूपायाः अशुद्धेः क्षये नाशे तनुभावे सति **आ विवेकख्यातेः**=विवेकख्यातिपर्य्यन्ता **ज्ञानदीप्तिः**=सम्यग्ज्ञानस्य निर्मलाऽभिव्यक्तिर्भवतीत्यर्थः ।

यथा यथा साधनान्यनुष्ठीयन्ते, तथा तथा अशुद्धिस्तनुतामापद्यते, यथा यथाऽशुद्धिस्तनुतामापद्यते, तथा तथा सम्यग्ज्ञानस्य दीप्तिर्विवर्द्धते । सा चास्य दीप्तिरा विवेकख्यातेर्विवृद्धिकाष्ठामनुभवति । तस्मात्साङ्गयोगानुष्ठानमेव तन्निष्पत्तिसाधनमिति भावः ।

**तत्र** योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं यथा परशुच्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्येति विवेकः ॥ २८ ॥

ननु कानि तानि योगाङ्गानि कियन्ति च ? तत्राह—

" यमनियमासनप्राणायामप्रत्याहारधारणा-
ध्यानसमाधयोऽष्टावङ्गानि " ॥ २९ ॥

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः**=यमाश्च, नियमाश्चासनञ्च, प्राणायामश्च, प्रत्याहारश्च, धारणा च, ध्यानं च, समाधिश्चेत्येते वक्ष्यमाणलक्षणाः **अष्टौ**=पूर्वपादोक्तानामभ्यासवैराग्यादीनामेष्वेवान्तर्भावादष्टसंख्याकाः **अङ्गानि**=योगोपाया इत्यर्थः ।

**तत्राभ्यासस्य** समाधौ, वैराग्यस्य सन्तोषे, श्रद्धावीर्य्यादीनां तपःस्वाध्यायादिषु, मैत्र्यादिपरिकर्मणां च धारणादिष्वन्तर्भाव इति विवेकः ॥ २९ ॥

**ननु** के यमाः ? तत्राह–

" **अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः** " ॥ ३० ॥

मनोवाक्कायैः सर्वदा सर्वभूतानामपीडनम् =**अहिंसा**, विवक्षायां कर्तव्यायां यथा दृष्टं यथा अनुमितं यथा श्रुतं तथा वाङ् मनश्च =**सत्यं**, सर्वथा परद्रव्यास्पृहा =**अस्तेयं**, गुप्तेन्द्रियस्योपस्थस्य संयमः =**ब्रह्मचर्य्यम्**, अर्जनरक्षणक्षयसङ्गहिंसादिदर्शनाद् देहयात्रातिरिक्तानां भोगसाधनानामस्वीकरणम् =**अपरिग्रहः**, अहिंसा च सत्यं चास्तेयं च ब्रह्मचर्य्यं चापरिग्रहश्चेत्येते

पञ्च **यमाः**=यम्यन्ते उपरम्यन्ते मनसा सहेन्द्रियाणि स्वविषयेभ्यो यैस्ते तथा यमशब्दवाच्या इत्यर्थः ।

अत्राहिंसा मुख्या, तच्छुद्ध्यर्थाश्चोत्तरे यमनियमाः । सर्वे ते योगविरोधिहिंसानृतस्तेयस्त्रीसङ्गादिनिरासकतया योगोपाया इति बोद्धव्यम् ॥ ३० ॥

**तत्र** योगिभिरुपादेयमपरं विशेषमाह—

**" जातिदेशकालसमयानवच्छिन्नाः**
**सार्वभौमा महाव्रतम् "** ॥ ३१ ॥

यमा इत्यनुवर्तते । यमाः **जातिदेशकालसमयानवच्छिन्नाः**=जातिर्मत्स्यादिः, देशः कुरुक्षेत्रादिः, कालो दर्शपूर्णमासादिः, समयः सङ्केतो नियमविशेष इति यावत्, जातिश्च देशश्च कालश्च समयश्च ते तथा, तैरनवच्छिन्ना असङ्कुचिताः **सार्वभौमाः**=जात्यादिलक्षणासु सर्वासु भूमिषु सर्वथैवाविदितव्यभिचाराः **महाव्रतं**=महाव्रतमित्याख्यायन्त इत्यर्थः ।

**यो**गमारुरुक्षुभिरेतन्महाव्रतमेवानुष्ठातव्यमित्युपदेशः ।

**तत्र** मत्स्यातिरिक्तं न हनिष्यामि, कुरुक्षेत्रे न हनिष्यामि, दर्शपूर्णमासयोर्न हनिष्यामि, केनचिदकारितो वाऽननुमोदितो वा न

हनिष्यामीति जात्यादिभिरवच्छेदः, न कञ्चित्कचित्कदाचित्कथञ्चिद्धनिष्यामीत्यनवच्छेदश्चाहिंसायां बोद्धव्यः । सत्यादिष्वप्येवं जात्यादिभिरवच्छेदोऽनवच्छेदश्चोहनीयः ॥ ३१ ॥

यमानुक्त्वा नियमानाह—

**“ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ” ॥ ३२ ॥**

**शौचं** द्विविधं बाह्यमाभ्यन्तरं च, मृज्जलादिभिः कायस्य, मेध्याभ्यवहरणादिभिरुदरस्य च प्रक्षालनं=बाह्यं, मैत्र्यादिभिश्चित्तमलानां रागद्वेषादीनां प्रक्षालनम्=आभ्यन्तरम् । सन्निहितसाधनादधिकस्यानुपादित्सा=**सन्तोषः** । द्वन्द्वसहनहितमिताशनादिकं=**तपः** । प्रणवादिपवित्राणां जपो, मोक्षशास्त्राणां च वेदोपनिषदामध्ययनं=**स्वाध्यायः** । सर्वक्रियाणां परमगुरौ जगदीश्वरे समर्पणं तत्फलसंन्यासश्च=**ईश्वरप्रणिधानं** । शौचञ्च सन्तोषश्च तपश्च स्वाध्यायश्चेश्वरप्रणिधानञ्चेत्येते पञ्च **नियमाः**=नियम्यन्तेऽवश्यकर्तव्यतया विधीयन्त इति ते तथा, नियमशब्दवाच्या इत्यर्थः ॥ ३२ ॥

**ननु** “श्रेयांसि बहुविघ्नानि” इति चेत्तेषां हिंसादिभिर्वितर्कैर्बाधनमुपतिष्ठेत, तदा किं कर्तव्यं ? **तत्राह**—

**“वितर्कबाधने प्रतिपक्षभावनम् ” ॥ ३३ ॥**

वितर्का इति हिंसादीनां तान्त्रिकी परिभाषा । यमा नियमा इति द्वयं षष्ठ्या विपरिणम्यानुवर्तते । यमानां नियमानां च तेषां **वितर्कबाधने**=हनिष्याम्येनमपकारिणम्, अनृतमपि वदिष्यामि, परधनमपि चोरयिष्यामि, परदारेष्वपि व्यवायी भविष्यामि, शौचमपि त्यक्ष्यामीत्येवं वितर्क्यमाणैर्हिंसामिथ्याभाषणादिभिर्वितर्कैर्बाधने प्रतिरोधे प्राप्ते सति **प्रतिपक्षभावनं**=प्रतिपक्षस्य घोरेषु संसारदुःखाङ्गारेषु पच्यमानेन मया परित्यज्य दुःखादिफलकान् हिंसादिवितर्कान् शरणमुपागताः खलु सर्वभूताभयप्रदानेन सुखज्ञानानन्तफला अहिंसादयो यमनियमाः, सोऽहं त्यक्त्वा वितर्कान् पुनस्तानेवाददानो नूनं तुल्यःस्यां श्ववृत्तेनेति तद्बाधकस्य दुःखादिफलकत्वस्य विरुद्धपक्षस्य भावनं चिन्तनं कुर्यादित्यर्थः ॥ ३३ ॥

**ननु** के ते वितर्काः ? किंप्रकाराः ? किंकारणकाः ! किंधर्मकाः ? किम्फलाः ? किञ्च प्रतिपक्षभावनं ? तत्राह—

**"वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्" ॥ ३४ ॥**

**हिंसादयः**=हिंसा आदौ येषां मिथ्याभाषणादीनां, ते हिंसादयो **वितर्काः**=वितर्कनामानो **दुःखाज्ञानानन्तफलाः**=

दुःखं चाज्ञानं च ते अनन्तेऽपरिछिन्ने फले येषां ते तथा, **इति**=इत्येवं प्रतिपक्षभावनमित्यन्वयः। कथं भूतास्ते दुःखाज्ञानानन्तफलाः? **कृतकारितानुमोदिताः**=स्वयं निष्पादिताः कृताः, कुर्विति परस्मान्निष्पादिताः कारिताः, साधु साध्वित्यभ्युपगताः अनुमोदिताः। पुनः कथं भूतास्ते ? **लोभक्रोधमोहपूर्वकाः**= मांसचर्मादितृष्णा लोभः, अपकृतमनेनेति परापकारहेतुः प्रज्वलनात्मकः कृत्याकृत्यविवेकोन्मूलकश्चित्तपरिणामभेदः क्रोधः, धर्मो मे भविष्यतीति विपर्य्ययज्ञानं मोहः, लोभश्च क्रोधश्च मोहश्च पूर्वं कारणं येषां ते तथा,लोभक्रोधमोहकारणकाः। पुनःकथंभूतास्ते? **मृदुमध्याधिमात्राः** मृदुलोभपूर्वकाः मृदवः, मध्यलोभपूर्वकाः मध्याः, अधिमात्रलोभपूर्वका अधिमात्राः । तत्रापि मृदुमृदुलोभपूर्वकाः मृदुमृदवः, मध्यमृदुलोभपूर्वकाः मध्यमृदवः, अधिमात्रमृदुलोभपूर्वकाः अधिमात्रमृदवः, मृदुमध्यलोभपूर्वकाः मृदुमध्याः, मध्यमध्यलोभपूर्वकाः मध्यमध्याः, अधिमात्रमध्यलोभपूर्वकाः अधिमात्रमध्याः, मृद्वधिमात्रलोभपूर्वकाः मृद्वधिमात्राः, मध्याधिमात्रलोभपूर्वकाः मध्याधिमात्राः, अधिमात्राधिमात्रलोभपूर्वकाः अधिमात्राधिमात्राः । एवं क्रोधमोहयोरपि मृदुमृद्वादिभेदेन हिंसादिभेदा ऊहनीयाः । **तथा** कृतादिभेदात् त्रिधाऽपि प्रत्येकं पुनर्लोभादिपूर्वकत्वात् त्रिधेति नवधा । लोभादयोऽपि मृदुमृदुमध्यमृद्वधिमात्रमृद्वादिभेदात्प्रत्येकं

नवधेत्येकाशीतिधा हिंसादयो वितर्काः दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनमित्यर्थः ।

तत्र हिंसादय इति वितर्कस्वरूपस्य, कृतकारितानुमोदिता इति प्रकारस्य, लोभक्रोधमोहपूर्वका इति कारणस्य, मृदुमध्याधिमात्रा इति धर्मस्य, दुःखाज्ञानानन्तफला इति फलस्य च निर्देशः। फलभावनमेव प्रतिपक्षभावनमिति विवेकः ।

यदा ह्ययं यमनियमपरो योगी प्रत्युपस्थितेषु वितर्केषु 'दुःखाज्ञानानन्तफलाः खल्वेते ममानिष्टकारिणः, इति भावयति, तदाऽस्य तद्विषयस्तावद् द्वेषः समुपजायते, द्वेषाच्च समूलमस्य तत्संपादित्सा निवर्तते, निवृत्तायां च तस्यां निष्प्रत्यूहेन प्रवर्तमानाः यमनियमाः द्रागित्येव सिद्धिमुपयन्ति, सिद्धाश्च ते चित्तं निर्मलीकुर्वन्तो योगं निष्पादयन्ति, कैवल्यं च निर्हरन्ति । तस्माद्यमनियमपरेण योगिना प्रत्युपस्थितेषु तेषु यत्नतः प्रतिपक्षभावनं विधेयमिति भावः ।

हिंसादिवितर्काणां पापोत्पत्त्या यथा दुःखफलकत्वं, तथा पापेन तमःसमुद्रेके चतुर्विधविपर्य्ययलक्षणस्याज्ञानस्योदयादज्ञानफलकत्वमपि निर्बाधम् । ते च दुःखाज्ञाने बीजाङ्कुरवदनुवर्तमानेअनन्ते इति दुःखाज्ञानानन्तफलकत्वमेतेषामिति मन्तव्यम् ॥ ३४ ॥

ननु सिद्धाः सम्प्रति यमनियमा इति कथं विज्ञेयमित्याकाङ्क्षायां तत्सिद्धिसूचकानि चिह्नानि यथाक्रममुपन्यस्यन्नाह—

**"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" ॥३५॥**

**अहिंसाप्रतिष्ठायाम्**=अहिंसायाः सिद्धौ सत्यां **तत्सन्निधौ**= तस्य प्रतिष्ठिताहिंसस्य भगवतो योगिनः सन्निधौ सविधे **वैरत्यागः**= शाश्वतिकविरोधानामप्यश्वमहिषमूषकमार्जाराहिनकुलप्रभृतिसर्वप्राणिनां मिथो वैरस्य विरोधस्य त्यागो हानं भवतीत्यर्थः ।

विरोधशीला अपि जन्तवस्तत्सन्निधानात्तच्चित्तानुकारिणः सन्तो वैरं परित्यजन्तीति भावः ॥ ३५ ॥

**"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" ॥ ३६ ॥**

**सत्यप्रतिष्ठायां**=सत्यस्य सिद्धौ सत्यां **क्रियाफलाश्रयत्वं** = क्रियासाध्यत्वाद्धर्माधर्मौ क्रिया, सुखं दुःखं फलं, तयोराश्रयत्वमस्य भगवतः प्रतिष्ठितसत्यस्य वाचो भवतीत्यर्थः ।

यदा वदति धार्मिको भूया इति पापोऽपि भवति धार्मिकः, सुखं प्राप्नुहीति दुःखभागपि प्राप्नोति सुखम् । किं बहुनाऽमोघाऽस्य वाग् भवतीति भावः ।

**क्रियाफलाश्रयत्वं**=प्रतिष्ठितसत्यस्य भगवतो वचनमात्रात्सर्वप्राणिनां क्रियाफलयोराश्रयत्वं भवतीति वार्तिककृतः ॥३६॥

**" अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् " ॥ ३७ ॥**

**अस्तेयप्रतिष्ठायाम्**= अस्तेयस्य सिद्धौ सत्यां **सर्वरत्नोपस्थानं**=सर्वाभ्यो दिग्भ्यो रत्नानामुपस्थानमस्य भगवतः प्रतिष्ठितास्तेयस्य भवतीत्यर्थः ।

विश्वासार्हत्वात् सङ्कल्पमात्रेणास्योपतिष्ठन्ते सर्वदिक्स्थानि रत्नानीति भावः ॥ ३७ ॥

**" ब्रह्मचर्य्यप्रतिष्ठायां वीर्यलाभः " ॥ ३८ ॥**

**ब्रह्मचर्य्यप्रतिष्ठायां**=ब्रह्मचर्य्यस्य सिद्धौ सत्यामस्य प्रतिष्ठितब्रह्मचर्य्यस्य भगवतो **वीर्य्यलाभः**=सामर्थ्यातिशयप्राप्तिर्भवतीत्यर्थः ।

एतदेव वीर्य्यं लब्ध्वा योगी प्रतिघातरहितानणिमादीनष्टौ गुणानुपचिनोति, तारसुतारादिभिरष्टभिः सिद्धिभिश्चोपेतः स्वशिष्यचेतस्सु योगतदङ्गविषयं ज्ञानमाधातुं समर्थो भवति, स्वराड्भवँश्चात्मीयं देहं स्वर्गं विदधाति, करणग्रामं चातिमृत्युं निर्वर्तयति । समाम्नातं च—

"ब्रह्मचर्य्येण तपसा देवा मृत्युमुपाघ्नत ।
इन्द्रो ह ब्रह्मचर्य्येण देवेभ्यः स्वराभरत"

अथर्व० ॥ ११ । ३ । ५ । १९ ॥ इति

देवाः=इन्द्रियाणि, मृत्युं=विषयग्रहणशक्तेर्विघातकं रोगजातम्, इन्द्रः=जीवात्मा, देहमिति विशेष्यपदमनुषज्यते । स्वः=स्वर्गं सुखमयमिति यावत् । आरभतिः करोतिकर्मा, लडर्थे लङ्-भ्यत्रेति मन्त्रपदार्थः । तस्मादेतत्सर्वथा पालनीयमिति परमो मन्त्रः ॥ ३८ ॥

" अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः " ॥ ३९ ॥

**अपरिग्रहस्थैर्य्ये**=अपरिग्रहप्रतिष्ठायां स्थिरापरिग्रहस्य भगवतो योगिनो **जन्मकथन्तासम्बोधः**=अपूर्वाभिर्देहेन्द्रियादिभिर्ज्ञानहेतुरभिसम्बन्धो जन्म, तस्य शान्तोदितभाविनः 'कोऽहमासं, कथमहमासं, किंस्विदिदं, कथंस्विदिदं, के वा भविष्यामः, कथं वा भविष्यामः, इति कथम्भावस्य सम्बोधो यथाकामं साक्षात्कारो भवतीत्यर्थः' ।

जन्मकथन्तयोः सम्बोध इति वार्तिककृतः । यदा ह्ययं स्थिरापरिग्रहो भगवान् योगी जिज्ञासते—विजानीयां सप्रकारमात्मप-

रात्मनोरतीतवर्तमानभाविजन्मोदन्तं, तदाऽस्य भवति सम्प्रकारातीन्द्रियजन्मत्रयसाक्षात्कारिविज्ञानमिति भावः ॥ ३९ ॥

**" शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः " ॥ ४० ॥**

**शौचात्**=सिद्धाद्बाह्यशौचादस्य शौचपरस्य भगवतो योगिनः **स्वाङ्गजुगुप्सा**=स्वकाये स्थानादिपर्य्यालोचनेन शुद्ध्यदर्शनाद् घृणा, यत्रेदमुक्तम्—

**स्थानाद्बीजादुपष्टम्भान्निस्पन्दान्निधनादपि ।**
**कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥१॥ इति।**

एतेन देहाध्यासनिवृत्तिरुक्ता, **परैः**=परकायैश्चाऽ**संसर्गः**= यदा शौचपरस्य मम कायो न शुध्यति, तदा किमु वाच्यं मलिनतरस्येतरस्य काय इति शुद्ध्यभावदर्शनात्संसर्गाभाव एकान्तवासित्वमिति यावत् भवतीत्यर्थः ॥ ४० ॥

वाह्यशौचसिद्धिसूचकं लिङ्गमुक्त्वाऽऽभ्यन्तरशौचसिद्धिसूचकं तत्समुच्चिन्वन्नाह—

**" सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥**

शौचादित्यनुवर्तते । शौचसिद्धेर्लिङ्गान्तरमेतदिति चार्थः ।

सिद्धादाभ्यन्तरशौचादस्य सिद्धशौचस्य भगवतो योगिनो बुद्धिसत्त्वशुद्धिश्च सौमनस्यं चैकाग्र्यं चेन्द्रियजयश्चात्मदर्शनयोग्यत्वं च यथाक्रमं भवतीत्यर्थः ।

तत्र मैत्र्यादिभिश्चित्तमलानां रागादीनामाक्षालनाद्वैमल्यं सत्त्वशुद्धिः, ततः सत्त्वोत्कर्षात्स्वच्छत्वं सौमनस्यं, ततो नियतविषये तदेकतानत्वमैकाग्र्यं,ततो मनस्तन्त्राणां बाह्येन्द्रियाणां वश्यत्वमिन्द्रियजयः, ततः पुरुषख्यातियोग्यत्वमात्मदर्शनयोग्यत्वमिति विवेकः ॥ ४१ ॥

**"सन्तोषादनुत्तमसुखलाभः" ॥ ४२ ॥**

**सन्तोषात्**=सिद्धात्सन्तोषादस्य सन्तुष्टचित्तस्य योगिनो**ऽनुत्तमसुखलाभः**=नोत्तमं सुखं यस्मात्तस्यानुत्तमसुखस्य लाभः प्राप्तिर्भवतीत्यर्थः । तदेतदुक्तं भगवता मनुनापि चतुर्थे—

**सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् ।**
**सन्तोषमूलं हि सुखं दुःखमूलं विपर्य्ययः ॥१२॥** इति

तस्मान्नियमेन सन्तोषपरो भवेदित्युपदेशः ॥ ४२ ॥

**" कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" ॥ ४३ ॥**

**तपसः** = सिद्धात्तपसो**ऽशुद्धिक्षयात्** = पापस्य संक्षयादस्य

भगवतस्तपस्विनः **कायेन्द्रियसिद्धिः** = कायसम्पत्-कायसिद्धिः, प्रतिभादिसिद्धिरिन्द्रियसिद्धिश्च भवतीत्यर्थः ॥ ४३ ॥

**" स्वाध्यायादिष्टदेवतासम्प्रयोगः"** ॥ ४४ ॥

**स्वाध्यायात्** = सिद्धात्स्वाध्यायादस्य स्वाध्यायशीलस्य भगवतो मुनेरि**ष्टदेवतासम्प्रयोगः** = इष्टानाम्- अभीष्टानां देवतानां दिव्यगुणवतां देवानामृषीणां सिद्धानां च सम्प्रयोगः साक्षात्कारो भवतीत्यर्थः ।

यानिच्छति ते सर्वे स्वाध्यायशीलस्यास्य महतो दर्शनपदवीं गच्छन्ति कार्यें चास्य सहायीभवन्तीति भावः ॥ ४४ ॥

**" समाधिसिद्धिरीश्वरप्रणिधानात् "** ॥ ४५ ॥

**ईश्वरप्रणिधानात्** = सिद्धादीश्वरप्रणिधानादस्य प्रणिदधतो भगवतो योगिनः **समाधिसिद्धिः** = सम्प्रज्ञातस्य समाधेः सिद्धिर्निष्पत्तिर्भवतीत्यर्थः ।

**न**न्वीश्वरप्रणिधानादेव चेदङ्गिनः सम्प्रज्ञातस्य समाधेःसिद्धिः, तदा कृतं यमादिभिः सप्तभिरितराङ्गैरिति चेत्। **न**। तेषां दृष्टादृष्टावान्तरव्यापारेणेश्वरप्रणिधानसिद्धावुपयोगात् , सम्प्रज्ञातसिद्धौ च संयोगपृथक्त्वन्यायेनेति नेतराङ्गवैयर्थ्यमिति **वाचस्पतिमिश्राः**। तत्रासनादीनां दृष्टद्वारा, यमादीनां चाशुद्धिक्षालनरूपादृष्टद्वारेति

विवेकः । ईश्वरप्रणिधानस्यापि निर्विघ्नतयेतरसप्ताङ्गनिष्पादनेनैव समाधिसाधकत्वं न स्वातन्त्र्येणेति न तद्वैयर्थ्यमिति **वार्तिककृतः।** समाधिसाधकत्वेऽपि सम्प्रज्ञेयागोचरत्वादीश्वरप्रणिधानं न समाधेरन्तरङ्गसाधनम्, अपि तु बहिरङ्गसाधनमेवेति विज्ञातव्यम्॥ ४५॥

एवं सह सिद्धिसूचकैश्चिह्नैर्यमनियमान् निरूप्य क्रमप्राप्तमासनं तावल्लक्षणतो निरूपयति—

**" स्थिरसुखमासनम् " ॥ ४६ ॥**

**स्थिरसुखं**–स्थिरं–निश्चलं सद् यत्सुखं-सुखावहं, तदासनम् -आस्यतेऽत्र वाऽनेन वेति तद्व्युत्पत्तेरासनशब्दवाच्यमित्यर्थः ।

आसनं हि द्विविधं बाह्यं, शारीरं च । तत्र चैलाजिनकुशोत्तर = बाह्यं, सिद्धपद्मभद्रादिकं च शारीरम् । तत्र येन स्थितस्य स्थैर्यं सुखं च सिध्येत, तदेवासनं योगाङ्गमुपासीतेति भावः ॥ ४६॥

नन्वेतदासनं कथं सिध्यति ? तत्राह—

**"प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" ॥ ४७ ॥**

आसनमित्यनुवर्तते । सिध्यतीति शेषः । स्वाभाविकी चेष्टा प्रयत्नः, स चाङ्गकम्पनहेतुत्वादासनस्य विघातकः, तस्य शैथिल्यात्

शिथिलीभवाद्, **अनन्ते** = स्वयंसिद्धासनके अनन्ते पशुपक्षिसरीसृपादिप्राणिभेदे **समापत्त्या** = तदासनानुकारभावनया चासनं सिध्यतीत्यर्थः ॥ ४७ ॥

ननु सिद्धमासनमिति कथं परिज्ञेयम् ? इत्याकांक्षायां तत्सिद्धिसूचकं लिङ्गमाह—

**"ततो द्वन्द्वानभिघातः"** ॥ ४८ ॥

**ततः** = तस्मात् सिद्धिमापन्नादासनादस्य सिद्धासनस्य भगवतो योगिनो **द्वन्द्वानभिघातः** = शीतोष्णादिभिर्द्वन्द्वैः शरीरप्राणादिपीडाहेतुः प्रतिकूलसम्बन्धो न भवतीत्यर्थः ॥ ४८ ॥

प्राणायामं लक्षयति—

**"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम:** ॥ ४९ ॥

**तस्मिन्** = आसने **सति** = सिद्धे सति **श्वासप्रश्वासयोः** = बाह्यस्य वायोराचमनं श्वासः, कोष्ठचस्य तस्य निःसारणं प्रश्वासः, तयोर्यो **गतिविच्छेदः** =शास्त्रोक्तरीत्या स्वाभाविकगतेः प्रतिरोधः श्वासप्रश्वासोभयाभाव इति यावत्, स **प्राणायामः** = प्राणायामपदार्थ इत्यर्थः ।

चतुर्विधो हि प्राणायामः रेचकः, पूरकः, कुम्भकः, केवलकुम्भक इति । तत्र यद्यपि कुम्भककेवलकुम्भकयोरेव परमार्थतः श्वासप्रश्वासयोर्गतिविच्छेदो न रेचके, प्रश्वाससद्भावात्, नापि पूरके, श्वासस्य सत्त्वात् । तथापि "एकसत्त्वेऽपि द्वयं नास्ति" इति न्यायेन श्वासप्रश्वासोभयाभावस्य तत्रापि विद्यमानत्वान्न क्वचिल्लक्षणाव्याप्तिरिति मन्तव्यम् ।

तत्र प्राणायाम इति लक्ष्यनिर्देशः, श्वासप्रश्वासयोर्गतिविच्छेद इति लक्षणम् । यथा अन्यकालकृतयोरपि यमनियमयोर्योगाङ्गत्वं, नैवमासनस्य, किन्तु प्राणायामाद्यङ्गपञ्चकसाहित्येनैवेति बोधयितुं तस्मिन्सतीति विशेषणमिति विवेकः ॥ ४९ ॥

**सा**मान्यतो लक्षयित्वा विशेषतो लक्षयन्नाह —

**"बाह्याभ्यान्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः"** ॥ ५० ॥

प्राणायाम इत्यनुवर्तते । स प्राणायामो **बाह्याभ्यन्तरस्तम्भवृत्तिः**=बाह्यवृत्तिः, आभ्यन्तरवृत्तिः, स्तम्भवृत्तिरिति त्रिविधः । यस्मिन् प्राणायामे प्रश्वासपूर्वको गत्यभावः स बाह्यवृत्तिः=रेचकः । कोष्ठगस्य वायोरेचनेन बहिर्गतस्य बहिरेव धारणात् । यस्मिन् प्राणायामे श्वासपूर्वको गत्यभावः, स आभ्यन्तरवृत्तिः=पूरकः ।

बाह्यस्य वायोः पूरणेनान्तर्गतस्यान्तरेव धारणात् । यस्मिन् प्राणायामे तप्तोपलन्यस्तोदकबिन्दुवद् रेचनपूरणप्रयत्नमन्तरेण सकृदेव विधारकात्प्रयत्नाच्छ्वासप्रश्वासयोरुभयोरभावः, स स्तम्भवृत्तिः= कुम्भकः । कुम्भस्थजलवद् देहे निश्चलत्वेनावस्थानात् । सोऽयं रेचकपूरककुम्भकभेदात् त्रिविधः प्राणायामो **देशकालसङ्ख्याभिः**= बाह्याभ्यन्तरः प्रदेशो **देशः**, क्षणानामियत्ता **कालः**, मात्रासङ्कलनेन श्वासप्रश्वासयोरियत्ता **सङ्ख्या**, देशश्च कालश्च सङ्ख्या च तास्तथा, ताभिः परिदृष्टः-अवच्छिन्नः-इयानस्य देशो विषयः, एतावत्क्षणपर्य्यन्तमस्य स्थैर्य्यम, एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः, एतावद्भिर्द्वितीयः, एतावद्भिस्तृतीयः, अयं मृदुः अयं मध्यः, अयं तीव्रः, इत्येवमवधारितो **दीर्घसूक्ष्मः**= प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घश्चासौ परमनैपुण्येन समधिगमनीयतया सूक्ष्मश्चेति दीर्घसूक्ष्मो भवतीत्यर्थः।

**तत्र** नासाग्रात्सम्मुखे प्रादेशवितस्तिहस्तादिपरिमितो बाह्यो देशो रेचकस्य विषयः । स च नासाग्रनिहितेषीकातूलादिक्रियया निश्चीयते । पूरकस्य चापादतलमा मस्तकादाभ्यन्तरो देशो विषयः। स चान्तर्गतेन पिपीलिकास्पर्शसदृशेन स्पर्शेनाध्यवसीयते । कुम्भकस्य च रेचकपूरकयोर्बाह्याभ्यन्तरौ देशौ समुच्चितावेव विषयः । उभयत्रैव प्राणस्य विलयात् । स चेषीकातूलादिक्रियायाः पिपी-

लिकास्पर्शसदृशस्पर्शस्य चानुपलब्ध्या समधिगम्यते । **तथा** चक्षुर्निमेषावच्छिन्नस्य कालस्य चतुर्थो भागः=क्षणः । तेषामियत्ता न यथायथं यन्त्रेणावगम्यते । **तथा** स्वस्थपुरुषस्य श्वासप्रश्वासक्रियाभ्यामवच्छिन्नो यावान् कालः, स मात्रेत्युच्यते । ताभिर्द्वादशमात्राभिः परिमितो नाभिमण्डलाद् बहिर्निःसरतः प्राणस्यापानपीडनात् स्थैर्यकाल उद्घात इति परिभाष्यते । स च द्वादशमात्रकः प्रथमो मृदुः, चतुर्विंशतिमात्रको द्वितीयो मध्यः, षट्त्रिंशन्मात्रकस्तृतीयस्तीव्रः, इति विवेकः ।

**इदन्तु बोध्यं**–यद्यप्यत्राचार्यै रेचकपूरककुम्भका इति प्राणायामक्रमः सूत्रितः, **तथापि** स पाठक्रम एवावगन्तव्यो नानुष्ठानक्रमः । अनुष्ठानक्रमस्तूत्सर्गतः पूरककुम्भकरेचका इति ॥ ५० ॥

प्राणायामत्रयं लक्षितं, सम्प्रति चतुर्थं प्राणायामं लक्षयति—

**"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" ॥ ५१ ॥**

प्राणायाम इत्यनुवर्तते । **बाह्याभ्यन्तरविषयाक्षेपी** विषयशब्दोऽत्र देशमाह, तेन कालः संख्या चोपलक्षणीये, पूर्वेणोक्तान्तरत्वात्, आक्षेपस्त्वतिक्रमः, बाह्यविषयो रेचकः, आभ्यन्तरविषयः पूरकः, तावुभौ देशवल्लक्षणानां गणनालक्षणेन कालेन मात्राणां गणनालक्षणया च संख्यया परिदृष्टावाक्षिप्तुम् अतिक्रम्य

केवलात्मतो वर्तितुं शीलमस्येति बाह्याभ्यन्तरविषयाक्षेपी रेचक-पूरकानपेक्षापूर्वकोऽसकृत्प्रयत्नवशात् । तां भूमिं समापद्य तत्तद्भूमि-विजयानुक्रमेण भवनशीलो यः श्वासप्रश्वासयोरुभयोर्गत्यभावः, स **चतुर्थः**=तुरीयः केवलकुम्भकः प्राणायाम इत्यर्थः ।

तत्र रेचकपूरकापेक्षापूर्वकः सकृत्प्रयत्नारब्धो गत्यभावस्तृतीयः कुम्भकः, तद्विपरीतश्चतुर्थोऽयं केवलकुम्भक इत्युभयोर्विशेषः । देशकालसङ्ख्यापरिदृष्टत्वं चोभयत्रापि समानम् । निद्रातन्द्रादियुक्तानां रेचकादित्रयं, तद्रहितानां त्वेष चतुर्थः । सोऽयं धारणाख्ययोगाङ्गनिष्पादक इति विवेकः ॥ ५१ ॥

**ननु** सिद्धोऽधुना प्राणायाम इति कथं विज्ञेयं ? तत्राह—

**"ततः क्षीयते प्रकाशावरणम्"** ॥ ५२ ॥

**ततः**=सिद्धाच्चतुर्विधप्राणायामात्तस्मात् **प्रकाशावरणं**=बुद्धिसत्त्वप्रकाशस्य विवेकज्ञानस्यावरणम् आव्रियतेऽनेनेति तदुत्पत्तेराच्छादकं क्लेशस्तज्जन्यः पाप्मा च द्वयं **क्षीयते**=दुर्बलं सदपचीयत इत्यर्थः ॥ ५२ ॥

सिद्धिसूचकमवान्तरफलमुक्त्वा मुख्यं फलमाह—

**"धारणासु च योग्यता मनसः"** ॥ ५३ ॥

तत इत्यनुवर्तते । फलान्तरसूचनाय चः । सिद्धात्प्राणाया-

+ इत्येतमर्थं चिन्तयतो वृत्तिकारस्य निमित्तसप्तमीयमिति वदतो व्याख्यातः।





मात्रास्माद् **धारणासु**=वक्ष्यमाणलक्षणासु तासु **मनसः**=चित्तसत्त्वस्य **योग्यता**=सामर्थ्यं भवतीत्यर्थः ।

प्राणायामैः क्षीणावरणं बुद्धिसत्त्वं यत्र धार्य्यते, तत्रैव स्थिरीभवति, न जातु विक्षेपं भजत इति भावः ॥ ५३ ॥

क्रमप्राप्तं प्रत्याहारं लक्षयति—

**"स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः"** ॥ ५४ ॥

**स्वविषयासम्प्रयोगे**=निमित्तसप्तमीयं, शब्दादिभिः स्वविषयैः सम्प्रयोगाभावे + तन्निमित्तको य **इन्द्रियाणां** = चक्षुरादीन्द्रियाणां **चित्तस्वरूपानुकार इव** = चित्तस्वरूपस्यानुकरणमिव स **प्रत्याहारः** = प्रत्याहारपदार्थ इत्यर्थः ।

यमादिभिः संस्कृतं हि चित्तसत्त्वं विषयावद्यदर्शि वैराग्याद् मोहनीयरञ्जनीयकोपनीयैः शब्दादिभिः स्वविषयैर्न सम्प्रयुज्यते, निरुद्धं च तत्त्वमभिनिविशते। तस्य तद्भावात्तदायत्तानीन्द्रियाण्यपि शब्दादिभिः स्वस्वविषयैरसम्प्रयुज्य स्वयमेव निरुध्यन्ते नोपायान्तरमपेक्षन्ते । य एष तेषां चित्तवत्स्वविषयैरसम्प्रयुज्य निरोधः, स एव चित्तस्वरूपानुकार इति भावः ।

तत्र चित्तनिरोधेनैवेन्द्रियाणां निरोधो नोपायान्तरायत्त इति सूच-

नाय निमित्तसप्तमी । निरोधसाम्येऽपि तेषां बाह्यविषयप्रवणतया चित्तवशात्त्वाभिनिवेशाभावसूचनार्थमिवशब्द इति विवेकः ॥५४॥

**ननु** प्रत्याहारतः किं भवति ? तत्राह—

**" ततः परमा वश्यतेन्द्रियाणाम् " ॥ ५५ ॥**

**ततः**=सिद्धात्प्रत्याहारा**दिन्द्रियाणां**=चक्षुरादीन्द्रियाणां **परमा**=उत्कृष्टा **वश्यता**=वशवर्तिता भवतीत्यर्थः ।

प्रत्याहारे सिद्धे चक्षुरादीन्द्रियाणां परमो जयो भवतीति भावः ।

**तत्र** शब्दादिविषयेष्वसक्तिरिन्द्रियजय इति **केचित्** । वेदाविरुद्धविषयसेवनं तद्विरुद्धेषु चाप्रवृत्तिः स **इत्यपरे** । शब्दादिविषयेष्विन्द्रियाणां स्वेच्छया सम्प्रयोगो न पुनर्विषयतन्त्रः स **इत्यन्ये** । माध्यस्थ्येन शब्दादिविषयज्ञानं स **इत्येके** । चित्तस्यैकाग्र्यात्सहेन्द्रियैर्विषयेष्वप्रवृत्तिः स इति भगवान् **जैगीषव्यः**। अयमेव परमो जयः सूत्रकारस्यापि सम्मत इति विवेकः ॥ ५५ ॥

**आदौ योगस्तथा क्लेशा मध्ये व्यूहचतुष्टयम् ।**
**योगाङ्गपञ्चकं चान्ते पादेऽस्मिन्नुपवर्णितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां योगसूत्रवैदिकवृत्तौ साधनपादो द्वितीयः ॥ २ ॥

* ओ३म् *

# विभूतिपादः

अथ प्रथमद्वितीयपादोक्तयोगतत्साधनानुष्ठाने मन्दानां श्रद्धोत्पादनेन साधनीभूता योगस्य बह्वीर्विभूतीर्निरूपयिष्यन्नाचार्य्यः पूर्वं तावत्तद्धेतुभूतेषु योगान्तरङ्गसाधनेषु परस्परकार्य्यकारणभावेनोपनिबद्धेषु धारणाध्यानसमाधिषु क्रमप्राप्तां धारणां लक्षयति—

" **देशबन्धश्चित्तस्य धारणा** " ॥ १ ॥

**चित्तस्य**=विषयासम्प्रयोगेण तत्त्वाभिमुखस्य चित्तसत्त्वस्य यो **देशबन्धः**=जीवेश्वरमुख्यस्थानभूतेषु नाभिचक्रहृदयपुण्डरीकमूर्द्धज्योतिरादिष्वाध्यात्मिकेषु चन्द्रसूर्याग्न्यादिषु वाऽऽधिदैविकेषु देशेषु विषयेषु बन्धः वृत्तिमात्रेण सम्बन्धः तदाकारः प्रत्यय इति यावत्, सा **धारणे**त्यर्थः ॥ १ ॥

धारणां लक्षयित्वा तत्साध्यं ध्यानं लक्षयति—

" **तत्र प्रत्ययैकतानता ध्यानम्** " ॥ २ ॥

**तत्र**=यत्र चित्तं धारितं तस्मिन् ध्येये विषये या **प्रत्ययैकतानता**=तदाकारवृत्तिलक्षणस्य चित्तसत्त्वप्रत्ययस्य विजातीयप्रत्ययान्तरेणापरामृष्टः सजातीयप्रत्ययरूपः सदृशः प्रवाहस्तद् **ध्यानं**=ध्यानपदवाच्यमित्यर्थः ॥ २ ॥

**ध्या**नानन्तरं तत्साध्यं समाधिं लक्षयति—

**" तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः "** ॥ ३ ॥

**तदेव**=पूर्वलक्षितं ध्यानमे**वार्थमात्रनिर्भासं**= केवलध्येयस्वरूपेणावभासमानं **स्वरूपशून्यमिव** = ध्येयस्वभावावेशात्प्रत्ययात्मकेन स्वेन रूपेण रहितमिव **समाधिः**=समाधिर्भवतीत्यर्थः ।

यथा स्फटिको मणिः कुसुमस्वभावावेशादात्मनः स्फाटिकं रूपं परित्यज्य केवलकुसुमस्वरूपेण निर्भासते, तथैवाभ्यस्यमानं ध्यानं यदा प्रत्ययात्मकं स्वं रूपं हित्वा केवलध्येयमात्राकारेणावभासते, तदा समाधिरित्यभिधीयत इति भावः ।

**तत्र** यस्मिन्नैकाग्र्यकाले ध्यातृध्यानध्येयावभासस्तद् **ध्यानं** । ध्येयमात्रावभासः, स **समाधिः** । यत्र स एव दीर्घकालनैरन्तर्य्यसत्कारासेवितः समाधिविषयाविषयसर्ववस्तुगोचरसाक्षात्कारोदयसंयुक्तः स **सम्प्रज्ञात** इति विवेकः ॥ ३ ॥

इदानीमुत्तरत्र प्रयोगलाघवार्थं पूर्वलक्षितानां धारणाध्यान-समाधीनां त्रयाणां स्वशास्त्रसिद्धां परिभाषामाह —

" त्रयमेकत्र संयमः " ॥ ४ ॥

**एकत्र** = एकार्थविषयं **त्रयं** = धारणादित्रितयं **संयमः** = संयमसंज्ञं भवतीत्यर्थः ।

समानविषयाणां धारणाध्यानसमाधीनां तान्त्रिकी परिभाषा संयम इति भावः ।

भिन्नविषयाणां तेषां तदभावबोधनार्थमुक्तमेकत्रेति ध्येयम् ॥ ४ ॥

**न**न्वस्य संयमस्य जयेन किं भवति ? **त**त्राह—

" तज्जयात्प्रज्ञाऽऽलोकः " ॥ ५ ॥

**तज्जयात्** = तस्य संयमस्य जयात् स्थैर्यात् **प्रज्ञाऽऽलोकः** = समाधिप्रज्ञायाः आलोकः निर्मलीभावो भवतीत्यर्थः ।

यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदीभवतीति भावः ॥ ५ ॥

**ननु** यस्येदृशं फलं स क्व विनियोक्तव्यः ? **त**त्राह—

" तस्य भूमिषु विनियोगः " ॥ ६ ॥

**तस्य** = पूर्वनिर्दिष्टफलस्य संयमस्य **भूमिषु** = प्रथमपादोक्त-

सवितर्कनिर्वितर्कादिसम्प्रज्ञातयोगभूमिषु विनियोगः = पूर्वपूर्वभूमिविजयानन्तरमविजितायामुत्तरोत्तरभूमौ विनियोजनं कर्तव्यमित्यर्थः।

पूर्वं स्थूलविषये सवितर्के समाधौ संयमस्य विनियोगः कर्तव्यः। तेन तस्मिन् विजितेऽविजिते निर्वितर्के। तस्मिन्नपि विजिते सूक्ष्मविषये सविचारे। तस्मिन्नपि विजिते निर्विचारे समाधौ विनियोगो विधेयः। तत्र तद्विनियोगं विदधतो योगिनस्तद्वैशारद्ये सति भवति प्रज्ञाऽऽलोक इति भावः।

**तत्रे**श्वरप्रसादाद्वा महानुभावानुग्रहाद्वा विजितोत्तरभूमिकस्य भगवतो योगिनस्तु नाधरभूमिकाविजयाय तत्र संयमविनियोगो विवक्षितः, किन्तु तदितरस्य योगिन इति विवेकः॥ ६॥

**ननु** योगाङ्गत्वाविशेषेऽपि कस्माद् धारणाध्यानसमाधीनामेव योगभूमिषु विनियोगो नेतरेषां ? तत्राह-

**"त्रयमन्तरङ्गं पूर्वेभ्यः॥ ७॥**

यत इति शेषः। यस्मात्**पूर्वेभ्यः**=द्वितीयपादान्ते लक्षितेभ्यो यमादिपञ्चभ्य**स्त्रयं**=धारणा ध्यानं समाधिरिति **त्रयमन्तरङ्गं**=योगान्तरङ्गाङ्गमित्यर्थः।

**तत्रा**न्तरङ्गत्वं साध्यसमानविषयत्वं, तद्भिन्नत्वं च बहिरङ्गत्वम्। यमादिपञ्चानां चित्तमलं निर्धूय तत्स्थैर्यसम्पादनद्वारा योगाङ्गत्वे

सत्यपि तत्समानविषयत्वाभावान्न योगभूमिषु विनियोग इति भावः ॥७॥

नन्वसम्प्रज्ञातयोगस्य निर्विषयत्वेन तत्समानविषयत्वासम्भवाद् धारणाध्यानसमाधित्रयं कथं तदन्तरङ्गाङ्गं स्यात् ? तत्राह—

**" तदपि बहिरङ्गं निर्बीजस्य " ॥ ८ ॥**

**तत्**=धारणा ध्यानं समाधिरिति त्रयम**पि**=सम्प्रज्ञातयोगस्यान्तरङ्गाङ्गं सदपि **निर्बीजस्य**=असम्प्रज्ञातयोगस्य निरोधसमाधे**र्बहिरङ्गं**=बहिरङ्गाङ्गमित्यर्थः ।

तस्यान्तरङ्गाङ्गं तु केवलं सम्प्रज्ञातपरमकाष्ठाऽपरनामज्ञानप्रसादरूपं परवैराग्यमेवेति निश्चेतव्यम् ॥ ८ ॥

विभूतिहेतुभूता धारणाध्यानसमाधयो यथायथं लक्षिताः । सम्प्रति तद्धेतुका विभूतीर्निरूपयितुं **"परिणामत्रयसंयमाद्०** ( यो० ३ । १६ ) इत्यत्रोग्योक्ष्यमाणं धर्मलक्षणावस्थाभेदं परिणामत्रयं प्रतिपिपादयिषुरादौ निरोधसमाधिप्रसङ्गेन तात्कालिकं चित्तस्य निरोधाख्यं धर्मपरिणामं तावदाह—

**" व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः " ॥ ९ ॥**

**व्युत्थाननिरोधसंस्कारयोः**= व्युत्थानमत्र सम्प्रज्ञातः, असम्प्रज्ञातापेक्षया तस्यापि व्युत्थानरूपत्वात्, स निरुध्यतेऽनेनेति निरोधः परवैराग्यं, तयोः संस्कारौ व्युत्थाननिरोधसंस्कारौ, तयोर**भिभवप्रादुर्भावौ**=व्युत्थानसंस्कारस्याभिभवः प्रतिक्षणं क्षयः, निरोधसंस्कारस्य च प्रादुर्भावः प्रतिक्षणमभ्युदयः, तत्रोभयत्र च **निरोधक्षणचित्तान्वयः**=यस्मिन् क्षणे निरोधो वर्तते, तन्निरोधक्षणं, तद्वर्ति चित्तं निरोधक्षणचित्तं, तस्य निरोधक्षणचित्तसत्त्वस्य धर्मिणोऽन्वयः आश्रयतया सम्बन्धः स **निरोधपरिणामः**=निरोधकालिकत्वान्निरोधाख्यो धर्मपरिणाम इत्यर्थः ।

प्रत्येकं निरोध क्षणेषु

प्रत्येकनिरोधक्षणेष्वेकस्मिन् स्थिरे चित्ते धर्मतयाऽन्वितो यश्चित्तस्य धर्माणां व्युत्थानसंस्काराणां प्रतिक्षणमभिभवो निरोधसंस्काराणां च प्रतिक्षणं प्रादुर्भावः स निरोधपरिणाम इति भावः ।

**तत्र** व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावाविति लक्षणं, निरोधपरिणाम इति लक्ष्यं, योगकाले प्रतिक्षणमेतादृशपरिणामलाभाय चित्तस्थैर्यलाभाय च " निरोधक्षणचित्तान्वय " इति विशेषणमिति विवेकः ।

धर्मलक्षणावस्थाभेदेन त्रिविधो हि धर्मिमात्रस्य परिणामः । सर्वे भावाः क्षणपरिणामिन ऋते चिच्छक्तेरित्यभ्युपगमात् । यस्ता-

वदवस्थितस्य धर्मिणः पूर्वधर्माभिभवे धर्मान्तरप्रादुर्भावः स **धर्मप-रिणामः** १ । धर्मैर्धर्मिणः परिणामो धर्मपरिणाम इति तद्व्युत्प-त्तेः । प्रादुर्भूतस्य धर्मस्यानागतादिलक्षणपरित्यागे वर्तमानादिलक्ष-णलाभो **लक्षणपरिणामः** २ । लक्ष्यते व्यावर्त्यते धर्मो धर्मान्तरा-दनेनेत्यनागतादिकालत्रयं लक्षणं, तेन धर्माणां परिणामो लक्षण-परिणाम इति तद्व्युत्पत्तेः । वर्तमानलक्षणानां च धर्माणां प्रतिक्षण-मवस्थातारतम्यम**वस्थापरिणामः** ३ । लक्षणानामवस्थाभिः परिणामोऽवस्थापरिणाम इति तद्व्युत्पत्तेः । तत्रादिमोऽत्र साक्षा-त्सूत्रितः, द्वितीयोऽभिभवप्रादुर्भावशब्दाभ्यामुक्तः । चित्तधर्माणां व्युत्था-निरोधसंस्काराणामनागतलक्षणपरित्यागेन वर्तमानलक्षणस्य व्युत्था-नसंस्काराणां च वर्तमानलक्षणपरित्यागेनातीतलक्षणस्य लाभात् । परिशिष्टस्तृतीयस्त्वग्रिमसूत्रे वक्ष्यत इति सर्वमनवद्यम ॥ ९ ॥

**ननु** निरोधसंस्काराणां पाटवेन निःशेषतो व्युत्थानसंस्कारा-भिभवे कथं पुनरेतच्चित्तं वहति ? तत्राह—

**" तस्य प्रशान्तवाहिता संस्कारात् "** ॥ १० ॥

**संस्कारात्**=पुनःपुनरभ्यासेन पटुभूतान्निरोधसंस्कारात्**तस्य**= निःशेषतोऽभिभूतव्युत्थानसंस्कारमलजातस्य निरुद्धचित्तसत्त्वस्य **प्रशान्तवाहिता**=प्रशान्ता सर्वथा व्युत्थानसंस्कारमलरहितत्वान्नि-र्मला वाहिता निरोधसंस्कारपरम्परालक्षणधारया वहनं भवतीत्यर्थः ।

निरोधसंस्कारपाटवेन सर्वथा व्युत्थानसंस्कारतिरोभावे निर्मलं संस्कारावशेषं चित्तसत्त्वमविच्छेदेन निरोधाभिमुखं वहतीति भावः ।

**अत्र** वर्तमानलक्षणानां निरोधसंस्काराणां प्रतिक्षणमुपचयं दर्शयताऽऽचार्य्येणावस्थापरिणामोऽपि दर्शित इति बोद्धव्यम् ॥ १० ॥

**ननु** सम्प्रज्ञातावस्थायां चित्तस्य कीदृशः परिणामो भवति ? तत्राह—

**" सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः " ॥ ११ ॥**

समाधिक्षणचित्तान्वय इति विपरिणम्यानुवर्तते । **सर्वार्थतैकाग्रतयोः**=सर्वार्थता नानार्थगोचरता विक्षेपः, एकाग्रता एकार्थगोचरता एकाग्र्यं, तयोः **क्षयोदयौ**=सर्वार्थतायाः क्षयः प्रतिक्षणं तिरोभावः, एकाग्रतायाश्चोदयः प्रतिक्षणमाविर्भावः, तत्रोभयत्र च धर्मितया **समाधिक्षणचित्तान्वयः**, **चित्तस्य**=समाधीयमानचित्तसत्त्वस्य धर्मिणः **समाधिपरिणामः**= समाधिकालिकत्वात्समाधिसंज्ञको धर्मपरिणाम इत्यर्थः ।

प्रत्येकं समाधिक्षणेष्वेकस्मिन् स्थिरे चित्ते धर्मतयाऽन्वितो

यस्तद्धर्मभूतायाः सर्वार्थतायाः क्षयः, एकाग्रतायाश्चोदयः, स चित्तस्य धर्मिणः समाधिपरिणाम इति भावः ॥ ११ ॥

नन्वभ्यासपाटवेन सर्वार्थतायाः सर्वथा क्षये समाहितचित्तस्य तस्य पुनः कीदृशः परिणामो भवति ? तत्राह—

**"शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः"** ॥ १२ ॥

एकाग्रताक्षणचित्तान्वय इति पूर्ववदत्रापि विपरिणम्यानुवर्तते। **चित्तस्य**=सर्वार्थतायाः सर्वथा क्षये समाधिं भजमानस्य समाहितस्य चित्तसत्त्वस्य यौ **शान्तोदितौ**=शान्तोऽतीतः, उदितो वर्तमानस्तौ अतीतवर्तमानौ **तुल्यप्रत्ययौ**=समानविषयत्वेन तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ, तत्रोभयत्र च धर्मितयैकाग्रताक्षणचित्तान्वयः, स तल्लक्षणः **एकाग्रतापरिणामः**=ऐकाग्र्यकालिकत्वादेकाग्रताख्यः परिणाम इत्यर्थः ।

प्रत्येकमेकाग्रताक्षणेष्वेकस्मिन् स्थिरे चित्ते धर्मतयाऽन्वितो यः समानविषयत्वेन आ समाधिभ्रेषादविच्छेदेनानुवर्तमानः पूर्वप्रत्ययसदृशः उत्तरप्रत्ययः समानप्रत्ययप्रवाह इति यावत्, स समाहितचित्तस्यैकाग्रतापरिणाम इति भावः ।

पूर्ववदत्रापि परिणामत्रयमूहनीयं, समानन्यायादित्यलं विस्तरेण ॥ १२ ॥

चित्तसत्त्वस्य धर्मिणः परिणामत्रयं व्याख्याय त्रिगुणत्वाविशेषादन्यत्राप्यतिदिशन्नाह—

**"एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामाः व्याख्याताः"** ॥ १३ ॥

**एतेन**=पूर्वोक्तचित्तसत्त्वपरिणामत्रयव्याख्यानेन **भूतेन्द्रियेषु**=त्रिगुणात्मकेषु पृथिव्यादिषु भूतेषु चक्षुरादिषु च समस्तेष्विन्द्रियेषु **धर्मलक्षणावस्थापरिणामाः**= धर्मपरिणामः, लक्षणपरिणामः, अवस्थापरिणामश्चेति त्रयः परिणामाः **व्याख्याताः** = विविच्याख्याता वेदितव्या इत्यर्थः ।

**तत्र** पृथिव्यादिभूतानां धर्मिणामवस्थितानामेव पूर्वपिण्डादिरूपधर्माभिभवे घटादिगवादिरूपधर्मान्तराविर्भावः=**धर्मपरिणामः** । धर्माणां चातीतानागतवर्तमानलक्षणलाभः= **लक्षणपरिणामः** । वर्तमानलक्षणानां च घटादिधर्माणां नवत्वपुराणत्वे, गवादीनां च बाल्यकौमारयौवनवार्द्धक्यम्=**अवस्थापरिणामः** । एवं चक्षुरादीन्द्रियाणां तत्तदर्थानालोचनादिरूपपूर्वधर्माभिभवे तत्तादर्थालोचनादिरूपधर्मान्तरप्रादुर्भावः=**धर्मपरिणामः** । धर्माणां चातीता-

ागतवर्तमानलक्षणलाभः=**लक्षणपरिणामः** । वर्तमानलक्षणानां बालोचनादीनां स्फुटत्वाऽस्फुटत्वादिः=**अवस्थापरिणाम,** इति विवेकः ॥ १३ ॥

**ननु** यस्यैष त्रिविधः परिणामस्तस्य धर्मिणः किं लक्षणं ? तत्राह—

**" शान्तोदिताऽव्यपदेश्यधर्मानुपाती धर्मी "** ॥ १४ ॥

**शान्तोदिताऽव्यपदेश्यधर्मानुपाती**=शान्ताः स्वस्वव्यापारान् कृत्वोपरताः अतीताः, उदिताः स्वस्वव्यापारान् कर्तुमुदयमिताः वर्तमानाः, अव्यपदेश्याः शक्तिरूपेण स्थितत्वाद् भेदेन व्यपदेष्टुमशक्याः भविष्यन्तः, शान्ताश्चोदिताश्चाऽव्यपदेश्याश्च ते धर्माश्च, तेषु—अतीतवर्तमानभविष्यत्सु धर्मेष्वनुपाती अन्वयी तराननुपतितुम् अन्वेतुं शीलमस्येति तद्व्युत्पत्तेः, यः सामान्यविशेषात्माऽर्थः, स **धर्मी**=धर्मिपदवाच्य इत्यर्थः ।

**शा**न्तोदिताऽव्यपदेश्येषु घटोदञ्चनादिषु स्वस्तिकरुचकादिषु च धर्मेषु योऽन्वयित्वेन वर्तमानः सामान्यविशेषात्मको मृत्सुवर्णादिरर्थः स धर्मीति भावः ॥ १४ ॥

**ननु** योऽयं त्रिविधो धर्मिणः परिणामः, स किं प्रत्येकमेकः, आहोस्विन्नानाविधभेदभिन्नः, भिन्नश्चेत्कोऽत्र को हेतुः ? तत्राह—

"क्रमान्यत्वं परिणामान्यत्वे हेतुः" ॥ १५ ॥

**परिणामान्यत्वे**=धर्मलक्षणावस्थालक्षणानां परिणामानां प्रत्येकं नानाविधभेदे **क्रमान्यत्वं**=परिदृश्यमानपरिणामपौर्वापर्य्यरूपक्रमस्य भेदो **हेतुः**=लिङ्गमित्यर्थः ।

**तत्र** मृदश्चूर्णं, चूर्णात्पिण्डः, पिण्डात्कपालं, कपालाभ्यां घट इत्येवं चूर्णपिण्डयोः पिण्डकपालयोः कपालघटयोरन्यत्वेनानुभूयमानो यः पौर्वापर्य्यलक्षणः क्रमः, स तस्य मृद्धर्मिणो धर्मपरिणामानां चूर्णादीनामन्यत्वे हेतुः । अनागतलक्षणस्य धर्मस्य वर्तमानलक्षणलाभः, वर्तमानलक्षणस्य चातीतलक्षणलाभः, 'तस्य पुनर्नास्ति लक्षणान्तरलाभः, पूर्वपरतायां सत्यां क्रमानुकल्पनाद्, इत्यनागतवर्तमानयोरेव लक्षणयोरन्यत्वेनानुभूयमानः क्रमो लक्षणपरिणामान्यत्वे हेतुः । वर्तमानलक्षणस्य चाभिनवस्य धर्मस्य प्रतिक्षणं तत्परम्परानुपातिना क्रमेणाभिव्यज्यमानतयाऽनुभूयमानः पुराणतादिक्रमोऽवस्थापरिणामान्यत्वे हेतुरिति विवेकः ।

**अत्र** धर्मलक्षणपरिणामौ कादाचित्कौ न प्रतिक्षणं नियमेन भवतः, अवस्थापरिणामस्तु नियमेन प्रतिक्षणं भवतीति विशेषः ।

**इदमत्र बोध्यं**—योऽयं मृदादेश्चूर्णादेश्चेह धर्मधर्मिभावो व्याख्यातः, स न पारमार्थिकः, किन्तु काल्पनिकः, मृदादेरपि

पञ्चतन्मात्राणां धर्मत्वात्, तेषां चाहङ्कारस्य, तस्यापि महतः, तस्य च प्रकृतेरित्येवं प्रकृतावेव परमार्थतो धर्मिभावविश्रान्तेरिति॥ १५॥

यदर्थं परिणामत्रयं सविवेकं प्रतिपादितं, तदेवाधुना निरूपयन्नाह —

**"परिणामत्रयसंयमादतीतानागतज्ञानम्" ॥ १६ ॥**

**परिणामत्रयसंयमात्**=पूर्वोक्तलक्षणे परिणामत्रये संयमकरणात्तत्साक्षात्कारे सति योगिनो**ऽतीतानागतज्ञानम्**=अतीतानागतसर्ववस्तुसाधारणधर्मलक्षणावस्थापरिणामविषयं साक्षात्कारात्मकं ज्ञानं भवतीत्यर्थः ॥ १६ ॥

**सं**यमसाध्यं विभूत्यन्तरमाह—

**"शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" ॥ १७ ॥**

**शब्दार्थप्रत्ययानां**=वाचकं पदं शब्दः, वाच्यः पदार्थोऽर्थः, तद्विषयो बौद्धानुभवः प्रत्ययः, शब्दश्चार्थश्च प्रत्ययश्च ते तथा, तेषां परमार्थतः प्रविभक्तानाम**इतरेतराध्यासात्** = परस्परप्रविभागाग्रहात्**सङ्करः** = गौरिति शब्दो गौरित्यर्थो गौरिति प्रत्यय इत्येवमादिलक्षणोऽभेदावभासः, **तत्प्रविभागसंयमात्** = तेषां शब्दार्थ-

प्रत्ययानां यः प्रविभागः—अन्यः शब्दोऽन्योऽर्थोऽन्यः प्रत्यय इति भेदः, तस्मिन् संयमात् संयमकरणात्तत्साक्षात्कारे सति योगिनः **सर्वभूतरुतज्ञानं** = सर्वेषां पशुमृगसरीसृपवयःप्रभृतीनां भूतानां यानि रुतानि वाङ्मयाः शब्दाः, तेषां ज्ञानम्—'अनेनायमेतमर्थमाचष्टे' इति साक्षात्कारात्मकं ज्ञानं भवतीत्यर्थः ॥ १७ ॥

**विभूत्यन्तरमाह—**

"**संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्**" ॥ १८ ॥

**संस्कारसाक्षात्करणात्**=संस्कारा द्विविधाः—वासनारूपाः धर्माधर्मरूपाश्च, तत्र स्मृतिक्लेशहेतवो वासनारूपाः, जात्यायुर्भोगहेतवो धर्माधर्मरूपाः, तेषां पूर्वपूर्वजन्मनिष्पादितानां सानुबन्धानां संस्काराणां तद्गोचरसंयमेन साक्षात्करणात् **पूर्वजातिज्ञानं**=पूर्वजन्मपरम्परायाः साक्षात्कारो भवतीत्यर्थः ।

यथाऽऽत्मसंस्कारसाक्षात्करणादात्मनोऽतीतजन्मपरम्परायाः ज्ञानं जायते, तथा परसंस्कारसाक्षात्करणात् परस्यापि पूर्वजन्मपरम्परायाः ज्ञानं भवतीति बोद्धव्यम् ॥ १८ ॥

**अपरां** विभूतिमाह—

"**प्रत्ययस्य परचित्तज्ञानम्**" ॥ १९ ॥



**प्रत्ययस्य**=परचित्तमत्र प्रत्ययः, तस्य केनचिल्लिङ्गेन

ृहीतस्य संयमेन साक्षात्करणात् **परचित्तज्ञानम्** = अशेषविशेष-
तः परचित्तस्य साक्षात्कारो भवतीत्यर्थः ॥ १९ ॥

ननु किं तदालम्बनमपि साक्षात्क्रियते ? तत्राह—

**"न च तत्सालम्बनं, तस्याविषयीभूतत्वात्" ॥ २० ॥**

**तत्** = परचित्तं **सालम्बनम्** = आलम्बनं विषयः, तत्स-
हितं **न च** = नैव साक्षात्क्रियते । कुतः ? **तस्य**=पालम्बनस्य-
तस्या**विषयीभूतत्वात्** = संयमविषयत्वाभावादित्यर्थः ।

केवलं रक्तमरक्तं वेति परप्रत्ययं जानाति, न त्वमुष्मिन् रक्त
ममुष्मिन्नरक्तमिति विशिष्य जानाति । यदा तु सालम्बने तस्मिन्
संयमः क्रियते, तदा तु जानात्येवेति भावः ॥ २० ॥

अन्यां विभूतिमाह—

**" कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशा-
सम्प्रयोगेऽन्तर्द्धानम् " ॥ २१ ॥**

**कायरूपसंयमात्** = पाञ्चभौतिकं स्वशरीमत्र कायः, तस्य
रूपे चक्षुर्ग्राह्यगुणविशेषे संयमात् संयमकरण. **तद्ग्राह्यशक्तिस्तम्भे** =
तस्य रूपस्य या ग्राह्यशक्तिः चक्षुर्ग्राह्यत्वशक्तिः चाक्षुषप्रत्यक्षजनन-
शक्तिरिति यावत् तस्याः स्तम्भे प्रतिबन्धे सति **चक्षुःप्रकाशास-**

**म्प्रयोगे** = परकीयचक्षुषः प्रकाशेन तज्जनितज्ञानेनासम्प्रयोगे विषयत्वाभावे **अन्तर्द्धानं** = यथा काममचाक्षुषत्वं योगिनः कायस्य भवतीत्यर्थः ।

**यदा**ऽयं योगी स्वकायस्य रूपे संयमं करोति, तदा साक्षात्कारपर्य्यन्तात्तस्माद् रूपस्य रूपवत्कायप्रत्यक्षताहेतुर्ग्राह्यशक्तिः स्तभ्यते, तत्स्तम्भे च परकीयचक्षुःप्रकाशेन सम्प्रयोगो न भवति तदसम्प्रयोगे च दिवान्धेनेव केनाप्यसौ न दृश्यते, कामयते चेदिति भावः ।

**एवं** स्वकायस्य शब्दस्पर्शरसगन्धेषु साक्षात्कारपर्य्यन्तात्संयमकरण द्ग्राह्यशक्तिस्तम्भे परकीयश्रोत्रत्वग्रसनघ्राणासम्प्रयोगे शब्दाद्यन्तर्द्धानं केनापि योगिनः शब्दादिकं न गृह्यत इत्यपि विज्ञातव्यम् ॥ २१ ॥

**अ**न्यविभूतिमाह—

**"सोपक्रमं निरुपक्रमं च कर्म, तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा"** ॥ २२ ॥

**कर्म** = आयुर्विपाकं कर्म द्विविधं—**सोपक्रमं निरुपक्रमं च** । तत्रोपक्रमो व्यापारः, फलदानाय तीव्रेण व्यापारेण सहितं दत्तबहुभोगमल्पावशिष्टं कर्म = **सोपक्रमं**, तद्विपरीतं = **निरु**-

र्मं, तत्संयमात् = तस्मिन् कर्मद्वये साक्षात्कारपर्य्यन्तात्संयम-
णादरिष्टेभ्यो वा = आध्यात्मिकाधिभौतिकाधिदैविकारिष्टे-
ो वा योगिनोऽपरान्तज्ञानम् = अस्मिन् कालेऽमुष्मिन् देशे
म देहः पतिष्यतीति स्वकीयापरान्तस्य मरणस्य ज्ञानं साक्षात्कारो
वतीत्यर्थः ।

तत्र स्वकरपिहितकर्णो यदाऽऽभ्यन्तरं प्राणघोषं न शृणोति,
हस्तावष्टब्धाक्षो वा हुतभुक्कणतुल्यं ज्योतिरन्तर्न पश्यति, तद-
िष्टमाध्यात्मिकं, यदकस्मादग्रे स्थितानिव भीषणाकारान् पुरु-
ान् स्वमातापितॄन् वा समतीतानवलोकयति तदरिष्टमाधिभौ-
तिकं, यद् ग्रहतारामण्डलमण्डितं द्युलोकं पूर्वस्माद्विपरीतं, सर्वं वा
विपरीतं सहसाऽऽकलयति, तदरिष्टमाधिदैविकमिति विवेकः ।

यद्यप्ययोगिनामप्यरिष्टेभ्यो मरणज्ञानं सम्भवति, तथापि
ेषां न तद् देशकालपूर्वकमिति न निश्चयात्मकं, योगिनां तु तत्पू
र्वकत्वान्निश्चयात्मकमिति विशेषः ॥ २२ ॥

अपरविभूतिमाह—

" मैत्र्यादिषु बलानि " ॥ २३ ॥

संयमादित्यनुवर्तते । मैत्र्यादिषु = मैत्रीकरुणामुदितासु सा-

क्षात्कारपर्य्यन्तात्संयमकरणाद् योगिनो **बलानि** = अबन्ध्यवीर्य्याणि मैत्र्यादिबलानि भवन्तीत्यर्थः ।

मैत्र्यादिषु संयमाल्लब्धमैत्र्यादिबलस्य योगिनः सुखित्वादिषु परेषां कर्तव्येषु कृतः प्रयत्नः अबन्ध्यो भवतीति भावः ।

पापशीलेषूपेक्षायास्तु केवलमौदासीन्यामात्रत्वात्तत्र संयमासम्भवेन नात्रादिपदेन संग्रह इति ध्येयम् ॥ २३ ॥

**विभूत्यन्तरमाह—**

**" बलेषु हस्तिबलादीनि "** ॥ २४ ॥

संयमादित्यनुवर्तते । **बलेषु** = हस्त्यादिबलेषु साक्षात्कारपर्य्यन्तात्संयमकरणाद् योगिनो **हस्तिबलादीनि**=हस्तिबलं, सिंहबलं, वैनतेयबलं, वायुबलमित्यादीनि बलानि जायन्त इत्यर्थः ।

ब्रह्मचर्य्यपूर्वकेण संयमेन किन्नु नाम लोके बलं, यन्न लभते भगवान् संयमीति भावः ॥ २४ ॥

**विभूत्यन्तरमाह—**

**" प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् "** ॥ २५ ॥



**प्रवृत्त्यालोकन्यासात्** = प्रथमपादोक्ता विशोका ज्योति-

ष्मती मनसः प्रकृष्टा वृत्तिरत्र प्रवृत्तिः, तस्याः यः आलोकः सात्त्विकः प्रकाशः, तस्य यो न्यासः सूक्ष्मव्यवहितविप्रकृष्टेषु प्रकृतिपरमाण्वादिष्वर्थेषु संयमेन विन्यासः, तस्माद् योगिनः **सूक्ष्मव्यवहितविप्रकृष्टज्ञानं** = सूक्ष्मव्यवहितविप्रकृष्टानां तत्कार्याणां साक्षात्कारात्मकं ज्ञानं भवतीत्यर्थः ।

कारणसाक्षात्कारे कार्य्यसाक्षात्कारस्यावश्यम्भावादिति भावः ॥२५॥

**विभूत्यन्तरमाह—**

**" भुवनज्ञानं सूर्य्ये संयमात् " ॥ २६ ॥**

**सूर्य्ये** = सूर्य्यमण्डले **संयमात्** = साक्षात्कारपर्य्यन्तात्संयमकरणाद् योगिनो **भुवनज्ञानं** = भुवनस्य लोकत्रयस्य जगतो ज्ञानम्—अशेषविशेषतः साक्षात्कारो भवतीत्यर्थः ।

सर्वमण्डलाधिपतिमण्डलं हि सूर्य्यमण्डलमिति भावः ॥२६॥

**विभूत्यन्तरमाह—**

**" चन्द्रे ताराव्यूहज्ञानम् " ॥ २७ ॥**

संयमादित्यनुवर्त्तते । **चन्द्रे** = चन्द्रमण्डले संयमकरणाद् योगिनस्**ताराव्यूहज्ञानं** = ताराणां नक्षत्राणां व्यूहस्य सन्निवेशविशेषस्य ज्ञानं साक्षात्कारो भवतीत्यर्थः ।

चन्द्रमशेषविशेषतः साक्षात्कुर्वतस्ताराव्यूहसाक्षात्कारसामर्थ्योत्पत्ते रिति भावः । पूर्वत्र त्रिलोकीज्ञानमत्र तु ताराव्यूहमात्रज्ञानमिति विशेषः ॥ २७ ॥

**"ध्रुवे तद्गतिज्ञानम्" ॥ २८ ॥**

संयमादित्यनुवर्तते । **ध्रुवे**=निश्चले तारामेदे संयमकरणाद् योगिन**स्तद्गतिज्ञानं**=तासां ताराणां गतिविशेषस्य ज्ञानं साक्षात्कारो भवतीत्यर्थः ॥ २८ ॥

**"नाभिचक्रे कायव्यूहज्ञानम्" ॥ २९ ॥**

संयमादित्यनुवर्तते । **नाभिचक्रे**= कायस्य मध्यभागे चतुः षट्पत्राभ्यामाधारलिङ्गचक्राभ्यामुपरिस्थितं यद् दशपत्रं नाभिचक्रं, तस्मिन् संयमकरणाद् योगिनः **कायव्यूहज्ञानं**=कायस्थपदार्थानां दोषधातुत्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणां व्यूहस्य सन्निवेश-विशेषस्य ज्ञानं साक्षात्कारो भवतीत्यर्थः ।

मूलं हि नाभिचक्रं कायस्येति भावः ॥ २९ ॥

**"कण्ठकूपे क्षुत्पिपासानिवृत्तिः" ॥ ३० ॥**

संयमादित्यनुवर्तते **कण्ठकूपे**=जिह्वायाः अधस्तात् तन्तुः, ततोऽधस्तात्कण्ठः, ततोऽधस्तात्कूपः कण्ठकूपः, तस्मिन् संयमकरणाद् योगिनः **क्षुत्पिपासानिवृत्तिः**=क्षुत्पिपासयोर्निवर्तनं भवतीत्यर्थः ।

कण्ठकूपसंयमिनं भगवन्तं योगिनं क्षुत्पिपासे न बाधेते, रस ...ानं हि तदिति भावः ॥ ३० ॥

" कूर्मनाड्यां स्थैर्यम् " ॥ ३१ ॥

संयमादित्यनुवर्तते । **कूर्मनाड्यां**=कण्ठकूपस्याधस्तादुरसि ...र्तमाना कूर्माकारा नाडी कूर्मनाडी, तस्यां संयमकरणाद् योगिनः ...थैर्यं=चित्तस्थैर्यं, कायस्थैर्यं वा गोधावद्भवतीत्यर्थः ॥ ३१ ॥

" मूर्द्धज्योतिषि सिद्धदर्शनम् " ॥ ३२ ॥

संयमादित्यनुवर्तते । **मूर्द्धज्योतिषि**= शिरःकपालयोर्मध्ये ...ब्रह्मरन्ध्रनामकं यदन्तश्छिद्रं, तदन्तः प्रभास्वरं ज्योतिर्मूर्द्धज्योतिः, ...स्मिन् संयमकरणाद् योगिनः **सिद्धदर्शनं**=द्यावापृथिव्योरन्त- ...सञ्चारिणां योगसिद्धिसम्पन्नानां योगिनां दर्शनं भवतीत्यर्थः । ...ते तदभ्यासयोग्यतां दृष्ट्वा स्वयमागच्छन्तीति भावः ॥ ३२ ॥

" प्रातिभाद्वा सर्वम् " ॥ ३३ ॥

पूर्वोदाहृतसंयमजातापेक्षया वाशब्दः । संयमादित्यनुवर्तते । ...प्रातिभाद्वा= प्रसङ्ख्यानहेतुसंयमप्रकर्षाज्जायमानमुदेष्यतो भग- ...वतः सूर्यस्य पूर्वदीप्तिरिव प्रसङ्ख्यानोदयस्य पूर्वलिङ्गं मनसोऽ- ...तीतानागतसूक्ष्मव्यवहितविप्रकृष्टनिखिलवस्तुविषयज्ञानजननसामर्थ्यं ...प्रातिभमिति योगानां तान्त्रिकी परिभाषा, तस्माद्वा भगवान् योगी

**सर्वम्**= अतीतानागतसूक्ष्मव्यवहितविप्रकृष्टं विश्वं वस्तु जानाति संयमान्तरनिरपेक्षः साक्षात्पश्यति—सर्वज्ञो भवतीत्यर्थः ॥ ३३ ॥

**"हृदये चित्तसंवित्" ॥ ३४ ॥**

संयमादित्यनुवर्तते । **हृदये**= चित्तनिवासस्थानमधोमुखं हृदयपुण्डरीकमत्र हृदयं, तस्मिन् संयमकरणात् योगिन**श्चित्तसंवित्**=वृत्तिविशिष्टचित्तसत्त्वस्य साक्षात्कारो भवतीत्यर्थः ॥३४॥

**"सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः, परार्थात् स्वार्थसंयमात्पुरुषज्ञानम्" ॥ ३५ ॥**

**सत्त्वपुरुषयोः** =बुद्धिसत्त्वपुरुषात्मनो**रत्यन्तासङ्कीर्णयोः**= परस्परविरुद्धधर्मकत्वान्नितान्तभिन्नयोर्यः **प्रत्ययाविशेषः**=शान्तघोरमूढलक्षणा तत्तद्विषयाकारा बुद्धिवृत्तिर्बुद्धिप्रत्ययः, पौरुषेयस्तद्वृत्तिबोधो वा, बोधेद्धा वृत्तिर्वा पुरुषप्रत्ययः, तयोरविशेषः विशेषो भेदस्तदभावः बुद्धिवृत्त्यविशिष्टवृत्तित्वं पुरुषस्येति यावत्, स भोगः। तत्र **परार्थात्**=परार्थकाद् बुद्धिप्रत्ययादन्यो यः **स्वार्थः**= स्वार्थकः पौरुषेयप्रत्ययः, तस्मिन् **संयमात्**=संयमकरणाद्भगवतो योगिनः **पुरुषज्ञानं**=पुरुषस्यात्मनः साक्षात्कारो भवतीत्यर्थः ।

तत्र पुरुषज्ञानं न पुरुषविषयं ज्ञानम्, अपि तु बुद्धिसत्त्वप्रतिबिम्बितपुरुषसाक्षिकं पुरुषालम्बनं ज्ञानमिति विवेकः ॥ ३५॥

**ननु** स्वार्थसंयमात्पुरुषज्ञानोत्पत्तेः प्राक् किं भवति ? **तत्राह**—

**"ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते" ॥ ३६ ॥**

**ततः**=अभ्यस्यमानात्स्वार्थसंयमात्पुरुषज्ञानोत्पत्तेः प्राग् भगवतो योगिनः **प्रातिभश्रावणवेदनादर्शास्वादवार्त्ताः**=प्रातिभादिसंज्ञिकाः षट् सिद्धयो **जायन्ते**=प्रादुर्भवन्तीत्यर्थः।

तत्र **प्रातिभं** प्राग् व्याख्यातं, श्रोत्रस्य दिव्यशब्दश्रवणसामर्थ्यं=**श्रावणं**, त्वचो दिव्यस्पर्शस्पर्शनसामर्थ्यं=**वेदना**, चक्षुषो दिव्यरूपदर्शनसामर्थ्यम्=**आदर्शः**, रसनायाः दिव्यरसास्वादनसामर्थ्यम्=**आस्वादः**, घ्राणस्य दिव्यगन्धाघ्राणसामर्थ्यं=**वार्त्ता**, सेयं योगानां तान्त्रिकी परिभाषेति विवेकः ॥ ३६ ॥

**सं**यमप्रवृत्तो योगी प्रातिभादीनधिगम्य कृतार्थम्मन्यो मध्य एव न विरमेद्, अतस्तद्धेयत्वार्थमाह—

**"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" ॥ ३७ ॥**

**ते**=प्रातिभादयः षट् **समाधौ**=पुरुषसाक्षात्कारफलके समाध **वुपसर्गाः**= विघ्नाः, केवलं **व्युत्थाने**=व्युत्थानावस्थायां **सिद्धयः**=ऐश्वर्य्यमित्यर्थः।

अतो मुमुक्षुभिः कदापि तत्र न रन्तव्यम्, अपि तु दोष-दर्शनाद्विरन्तव्यमिति भावः ॥ ३७ ॥

इतः पूर्वं संयमसाध्या ज्ञानात्मिका विभूतिर्दर्शिता, सम्प्रति क्रियात्मिकां तां दर्शयन्नाह——

**"बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः"** ॥ ३८ ॥

**बन्धकारणशैथिल्यात्**=शरीराभ्यन्तरे चित्तस्य बन्धनं-प्रतिष्ठानं–ज्ञानहेतुसम्बन्धविशेषो बन्धः, तस्य कारणे आरब्धा-ख्यौ धर्माधर्मौ, तयोः शैथिल्यं संयमेन बन्धाक्षमीभावः, तस्मात्, **प्रचारसंवेदनाच्च**= प्रचरत्यनेनास्मिन्निति वा प्रचारः चित्तस्य गमनागमनाध्वानो नाड्यः, तस्य संवेदनं संयमेन साक्षात्करणं, तस्माच्च **चित्तस्य**= योगिनश्चित्तस्य **परशरीराऽऽवेशः**= स्व-शरीरान्निर्गत्य परस्य जीवति वा मृते वा शरीरे प्रवेशो भवती-त्यर्थः ।

**तत्र** शरीरान्तश्चित्तबन्धकारणमदृष्टं, संयमेन तच्छैथिल्यं, प्रचारसंयमेन च तत्संवेदनं सम्पादयन् योगी यदाऽऽत्मचित्तं स्वश-रीरान्निष्कृष्य परशरीरे निक्षेप्तुमिच्छति, तदा बन्धकारणशैथिल्या-दप्रतिबद्धं प्रचारसंवेदनाच्च निष्प्रत्यूहमस्य चित्तं स्वशरीरान्नि-

ष्क्रामति, परशरीरं चाविशति। तदनुसारीणि चेन्द्रियाणि मक्षिका इव मधुकरराजानं स्वयमेव तदनुनिष्क्रामन्ति, यथास्थानं चाविशन्ति। तस्माच्चित्तस्य परशरीरावेशे संयमद्वयस्य समुच्चयो न विकल्प इति विवेकः॥ ३८॥

"उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च"॥ ३९॥

**उदानजयात्**= जीवननाम्नीक्रियाशक्तिप्रधानस्यान्तःकरणस्य वृत्तिः=प्राणः, स च प्राणसमानापानोदानव्यानभेदात्पञ्चधा, तत्रोदानस्य जयात् संयमेन वशीकाराद् भगवतो योगिनो **जलपङ्ककण्टकादिषु**=महानद्यादौ जले, महति कर्दमे, तीक्ष्णेषु कण्टकेषु, आदिना हुतभुगङ्गारेषु **चासङ्गः**=विकारहेतुः सम्बन्धः सङ्गः, तदभावोऽसङ्गः, **उत्क्रान्तिश्च**=मरणवेलायां शरीरादुत्क्रमश्च स्वेच्छया भवतीत्यर्थः।

उदानजयी भगवान् योगी जलादीनामुपरि भूमिवत्सञ्चरन्नपि तैर्न प्रतिहन्यते, यथाकामं च मरणं लभत इति भावः।

**तत्र** प्राणनक्रियाहेतुरा नासिकाग्रादा च हृदयादवस्थितः **प्राणः**, अशितपीताहारपरिणतिभेदस्य रसस्य तत्र तत्र स्थाने सम्यङ्नयनहेतुरा हृदयादा च नाभेरवस्थितः **समानः**, मूत्र-

पुरीषगर्भादीनामपनयनहेतुरा नाभेरा च पादतलादवस्थितोऽपा- **नः**, ऊर्द्ध्वनयनहेतुरा नासिकाग्रादा च शिरसोऽवस्थित **उदानः**, देहशोथहेतुः सर्वदेहव्यापी **व्यानः**। सर्वेषां चामीषां प्रधानं प्राणः, तदुत्क्रमे सर्वोत्क्रमश्रुतेरिति विवेकः ॥ ३९ ॥

**स**मानजयफलमाह—

**" समानजयाज्ज्वलनम् "** ॥ ४० ॥

**समानजयात्**= समानस्य संयमेन वशीकाराद् योगिनो **ज्वलनं**=तेजोवज्ज्वलनं भवतीत्यर्थः ।

**स**मानजयी भगवान् योगी शारीरमग्निमुत्तेजयन्नग्निरिव ज्वलतीति भावः ॥ ४० ॥

**" श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम् "** ॥४१॥

**श्रोत्राकाशयोः**=शब्दग्राहकेन्द्रियं श्रोत्रं, गगनमाकाशः, तयोः **सम्बन्धसंयमात्**=आधाराधेयभावलक्षणे सम्बन्धे संयमकरणाद् जितसम्बन्धस्य योगिनो **दिव्यं**= सूक्ष्मशब्दग्राहकं **श्रोत्रं**= श्रोत्रेन्द्रियं भवतीत्यर्थः ।

**एवं** त्वग्वाय्वोः, चक्षुस्तेजसोः, रसनोदकयोः, घ्राणोर्व्योः, सम्बन्धे संयमात् त्वक्चक्षूरसनाघ्राणेन्द्रियाणि दिव्यानि जायन्ते, येषां श्रावणादिसंज्ञा सूचिता पुरस्तादित्यपि द्रष्टव्यम् ॥ ४१ ॥

**" कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् " ॥ ४२ ॥**

**कायाकाशयोः**=पाञ्चभौतिकं शरीरं कायः, गगनमाकाशः, तयोः **सम्बन्धसंयमात्**=व्याप्यव्यापकभावलक्षणे सम्बन्धे संयमकरणात्तज्जयेन, **लघुतूलसमापत्तेश्च**=लघुनि तूलादौ संयमेन चेतसस्तत्स्थतदञ्जनताप्राप्तेश्च लघूभूतकायस्य भगवतो योगिनः **आकाशगमनं**=यथेष्टं व्योमचारो भवतीत्यर्थः ।

कायाकाशयोः सम्बन्धे संयमेन जितसम्बन्धो वा, लघुनि तूलादौ चाऽऽपरमाणुभ्यः संयमेन लब्धसमापत्तिर्वा भगवान् योगी लघुकायो भवति लघुभावाच्च भूमाविव जलेऽपि निःशङ्कं विहरति, व्योम्नि च यथाकामं सञ्चरतीति भावः ॥ ४२ ॥

**" बहिरकल्पिता वृत्तिर्महाविदेहा, ततः प्रकाशावरणक्षयः " ॥ ४३ ॥**

**बहिः**=शरीराद्बहिर्बाह्ये विषये**ऽकल्पिता**="शरीराद्बहिरस्तु मम मनः" इति कल्पनां विनैव जाता **वृत्तिः**=शरीराप्रतिष्ठस्य स्वातन्त्र्येण बहिर्वर्तमानस्य मनसो वृत्तिर्**महाविदेहा**= महाविदेहानाम्नी धारणा यदा संयमवशात् सिद्धा भवति, तदा **ततः**=महाविदेहाख्यधारणातो योगिनः **प्रकाशावरणक्षयः**=बुद्धिसत्त्वं प्र-

काशः, तस्यावरणं रजस्तमोमूलं क्लेशकर्मविपाकत्रयं, तस्य क्षयो भङ्गो भवतीत्यर्थः ।

'बहिरस्तु मम मनः' इति कल्पनया शरीराद् बहिर्बाह्ये विषये तत्प्रतिष्ठस्यैव मनसो वृत्तिलाभः कल्पिता विदेहा धारणेत्युच्यते । सा च साधनरूपा । तया संयमवशाद् यदा योगी तत्फलभूतां महाविदेहामकल्पितां धारणां साधयति, यस्यां मनस्त्यक्तशरीरप्रतिष्ठं स्वतन्त्रं विनैव कल्पनया बहिर्वृत्तिं लभते, तदा तस्य सिद्धाकल्पितमहाविदेहाधारणस्य योगिनो यथाकामपरशरीरावेशावान्तरफलः प्रकाशावरणक्षयो भवति । तत्क्षयाच्च निरावरणं तच्चित्तं यथेच्छं विहरति, विजानाति च सर्वमिति भावः ॥ ४३ ॥

"**परिणामत्रयसंयमाद्**" इत्यारभ्योच्चावचविषयाणां संयमानां यथासम्भवं सिद्धयः उपवर्णिताः । संप्रति "**वितर्कविचारा**" ( यो० १७ ) इत्यादिसूत्रैः स्वशास्त्रे मुख्यतः प्रकृतेषु ग्राह्यग्रहणग्रहीतृषु ये संयमाः, तेषां सिद्धीरुपवर्णयिष्यन्नादौ ग्राह्यविषयसंयमस्य सिद्धिमुपवर्णयति—

"**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्**
**भूतजयः**" ॥ ४४ ॥

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमात्**=स्थूलं च स्व-

रूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं च, तानि तथा, तेषु स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वेषु भूतानां पञ्चसु रूपेषु साक्षात्कारपर्य्यन्तात्संयमकरणाद् योगिनो **भूतजयः**=भूतजलज्योतिरनिलाकाशानां पञ्चानां भूतानां जयो वशीकारो भवतीत्यर्थः ।

**तत्र** क्रमेणैकैकन्यूनैर्गन्धादिभिः पञ्चभिर्विशेषगुणैर्युक्तः परिदृश्यमानोऽवयवसंस्थानलक्षणः पृथिव्यादिविशेषो भूतानां प्रथमं **स्थूलं** रूपम् । तत्र काठिन्यस्नेहौष्ण्यादिभिर्धर्मैर्व्यङ्ग्यं पृथिवीत्वादिकं स्वस्वसामान्यं तेषां द्वितीयं **स्वरूपं** रूपम् । तत्कारणं परमाणवः, तेषां पञ्च तन्मात्राणि च, तेषां तृतीयं **सूक्ष्मं** रूपम् । तत्कारणत्वेन तत्रान्वितं गुणत्रयं तेषा**मन्वयो** नाम चतुर्थं रूपम् । भोगापवर्गार्थता गुणेष्वन्वयिनी, गुणाश्च तन्मात्रभूतभौतिकेष्वन्वयिन इति **भोगापवर्गार्थवत्त्वं** तेषां पञ्चमं रूपमिति विवेकः ।

**यो**गानां धर्मधर्मिणोरभेदाभ्युपगमात्सामान्यविशेषसमुदायो द्रव्यं वैशेषिकाणां तु तदाश्रय इति विशेषः ॥ ४४ ॥

**ननु** भूतजये योगिनः किं भवति ? तत्राह—

**" ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च " ॥ ४५ ॥**

**ततः**=भूतजयाद् योगिनोऽणिमादिप्रादुर्भावः=अणिमा,

लघिमा, महिमा, प्राप्तिः, प्राकाम्यं, वशित्वम् , ईशितृत्वं, यत्रकामावसायित्वम् , इत्यणिमाद्यष्टसिद्धीनां प्रादुर्भावः प्राप्तिः, **कायसम्पत्**= वक्ष्यमाणा रूपलावण्यादिलक्षणा कायसम्पत्तिः, **तद्धर्मानभिघातश्च**= तेषां पृथिव्यादिभूतानां ये यथाक्रमं काठिन्यस्नेहौष्ण्यप्रणामित्वानावरणत्वरूपाः धर्माः, तैरनभिघातः अप्रतिघातश्च भवतीत्यर्थः ।

**तत्र** परमाणुवदणुभावोऽ**णिमा** । मुञ्जेषीकातूलवल्लघुभावो **लघिमा**। व्योमादिवन्महद्भावो **महिमा**। सर्वभावसान्निध्य **प्राप्तिः**। ताश्चैताश्चतस्रः सिद्धयो भूतानां स्थूले रूपे संयमस्य विजयाद् योगिनो भवन्ति । **प्राकाम्यम्**= इच्छानभिघातः । तच्चास्य स्वरूपसंयमविजयफलम् । सूक्ष्मसंयमविजयफलं भूतभौतिकेषु नियन्तृत्वं **वशित्वम्** । अन्वयसंयमविजयफलं भूतभौतिकेषु स्रष्टृत्वम्=**ईशितृत्वम्** । सत्यसंकल्पत्वं **यत्रकामावसायित्वम्** । तच्चास्यार्थवत्त्वसंयमविजयफलम् , इत्यष्टौ सिद्धयः । काठिन्यं पृथिवीधर्मः, तेन तत्र प्रविशन्नपि भूतविजयी योगी न प्रतिहन्यते, स्नेहेन च जलधर्मेण न क्लेद्यते, ज्योतिर्धर्मेण चौष्ण्येन न दह्यते, वायुधर्मेण प्रणामित्वेन न दोधूयते, व्योमधर्मेण चानावरणत्वेनानभिभूतो योगी तत्र कथञ्चिदुत्पतन्नपि न केनचिदवलोक्यते, यतो भवत्यावृतकायः सिद्धानामप्यदृश्य इति तद्धर्मानभिघात इति विवेकः।

इदमत्र बोध्यं-यद्यपि प्राप्ताष्टसिद्धिर्योगी कर्तुमकर्तुमन्यथा वा कर्तुं शक्तः, तथापि तेन पदार्थशक्तय एव विपर्यस्यन्ते, न पदार्था इति ॥४५॥

कायसम्पदमाह—

" रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् " ॥४६॥

**रूपलावण्यबलवज्रसंहननत्वानि**= दर्शनीयरूपं रूपं, सर्वाङ्गसौन्दर्य्यं लावण्यं, वीर्य्यातिशयो बलं, वज्रस्येव कायस्यावयवव्यूहदार्ढ्यं वज्रसंहननत्वं, रूपं च लावण्यं च बलं च वज्रसंहननत्वं च, तानि एतानि चत्वारि **कायसम्पत्**=देहैश्वर्य्यमित्यर्थः ॥ ४६ ॥

ग्राह्यसंयमस्य सिद्धीर्न्यरूरूपत्। सम्प्रति ग्रहणसंयमस्य सिद्धीर्निरूपयन्नाह—

" ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः " ॥ ४७ ॥

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमात्**=ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च, तानि तथा, तेषु ग्रहणस्वरूपास्मितान्वयार्थवत्त्वेषु पञ्चस्विन्द्रियाणां रूपेषु साक्षात्कारपर्य्य-

न्तात्संयमकरणाद् योगिन **इन्द्रियजयः**=चक्षुरादीन्द्रियाणां वशीकारो भवतीत्यर्थः ।

**तत्र** रूपादिगोचरेन्द्रियाणामालोचनादिलक्षणा वृत्तिर्**ग्रहणं**, चक्षुष्ट्वादिकं **स्वरूपं**, तत्कारणं सात्त्विकोऽहंकारोऽस्मिता, तत्रानुगतं गुणत्रयमन्वयाः, तदनुगतं भोगापवर्गार्थत्वमर्थवत्त्वमिति विवेकः ॥ ४७ ॥

नन्विन्द्रियजयात्किं भवति ? तत्राह—

**" ततो मनोजवित्वं विकरणभावः प्रधानजयश्च "** ॥४८॥

**ततः**=इन्द्रियजयादस्य भगवतो योगिनो **मनोजवित्वं**=मनोवत्कायस्यानुत्तमगतिलाभः, **विकरणभावः**= कायनिरपेक्षाणामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभः, **प्रधानजयश्च**=सर्वप्रकृतिविकारवशवर्तित्वं च भवतीत्यर्थः ।

**ता** एतास्तिस्रः सिद्धय एव योगशास्त्रनिष्णातैः '**मधुप्रतीकाः**' इत्युच्यन्ते। तत्र ग्रहणसंयमफलं **मनोजवित्वं**, स्वरूपसंयमफलं **विकरणभावः**, अस्मितान्वयार्थवत्त्वसंयमफलं **प्रधानजय** इति विवेकः ॥ ४८ ॥

क्रमप्राप्तां ग्रहीतृसंयमजां सिद्धिमाह—

"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" ॥ ४६ ॥

**सत्त्वपुरुषान्यताख्यातिमात्रस्य**=साक्षात्कारपर्य्यन्ताद् ग्रहीत्राख्यस्वार्थसंयमाद् बुद्धिपुरुषान्यताख्यातिमात्ररूपेण प्रतिष्ठितचित्तस्य भगवतो योगिनः **सर्वभावाधिष्ठातृत्वं**=निखिलपदार्थनियन्तृत्वं, **सर्वज्ञातृत्वं** च= सर्वपदार्थविज्ञातृत्वं च भवतीत्यर्थः।

सत्त्वपुरुषान्यताख्यातिमात्रो योगी न जातु कस्यचिन्नियम्यो भवति, न वा लोके तादृशः कश्चित्पदार्थः, यस्यासौ तत्त्वं न विजानातीति भावः।

एषैव च द्वयी सिद्धिः **विशोका** नाम, यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशकर्मबन्धनो विशोको वशी विहरतीति बोद्धव्यम्।

तत्र पूर्वं स्वार्थसंयमात्पुरुषज्ञानमुक्तम्, अधुना तु ज्ञाननिष्ठस्य विभूतिरिति विवेकः॥ ४९ ॥

विवेकख्यातेरवान्तरफलमभिधाय मुख्यं फलमाह—

"तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्" ॥ ५० ॥

भिन्नक्रमोऽपिः पूर्वोक्तं फलं समुच्चिनोति। **तद्वैराग्यात्**=तस्यां विवेकख्यातौ जायमानात्परवैराग्यात् **दोषबीजक्षये**= दोषाः

क्लेशाः तेषां बीजानि संस्काराः, तेषां क्षये सर्वात्मना तिरोभावे, जातेऽसम्प्रज्ञाते समाधौ भगवतो योगिनः **कैवल्यं**=कैवल्यं फलं भवतीत्यर्थः ॥ ५० ॥

" श्रेयांसि बहुविघ्नानि" इति कैवल्यसाधने समाधौ प्रवृत्तस्य योगिनो मध्ये विघ्नमाशङ्क्य तन्निराकरणोपायमुपदिशति–

**"स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" ॥ ५१ ॥**

**स्थान्युपनिमन्त्रणे**=स्थानिभिः—तत्तत्स्थानस्वामिभिर्महेन्द्रादिभिरुत्कृष्टैश्वर्यैर्गेहिभिरु**पनिमन्त्रणे**="भोरिहास्यताम्, इह रम्यतां, कमनीयोऽयं भोगः, कमनीयेयं कन्या रसायनमिदं जरामृत्युं बाधते, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धाः महर्षयः, उत्तमाः अनुकूलाः अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियम्" इत्येवं सत्कारपूर्वकाह्वाने भगवान् योगी **सङ्गस्मयाकरणं**=संगः प्रीतिः, अहो मम योगप्रभाव इत्यात्मनि कृतार्थताभिमानः स्मयः, तयोरकरणम् अनुद्भावनं कुर्यात् । कुतः ? **पुनरनिष्टप्रसङ्गात्**=सङ्गस्मयकरणे पुनरनिष्टस्य संगात्पातित्यस्य स्मयात्कैवल्यसाधने समाधावनुत्साहस्य च प्रसंगात् प्रसक्तेरित्यर्थः ।

चत्वारः खलु योगिनो भवन्ति—प्राथमकल्पिको, मधुभूमिकः, प्रज्ञाज्योतिरतिक्रान्तभावनीयश्च । तत्रावशीकृतपरचित्तादिज्ञानः प्रवृत्तमात्रोऽभ्यासी सवितर्कसमाधिमान् प्रथमः, निर्वितर्कसमाधिना मधुमतीं भूमिमृतम्भरप्रज्ञां लब्ध्वा भूतेन्द्रियाणि विजिगीषुर्द्वितीयः। स्वार्थसंयमेन विशोका, संस्कारशेषा चेति भूमिद्वयं सिषाधयिषुर्जितभूतेन्द्रियस्तृतीयः । मधुमती, मधुप्रतीका, विशोकेति भूमित्रये विरक्तः कृतकृत्योऽवशिष्टचित्तविलयः संस्कारशेषलक्षणभूमौ वर्तमानः सप्तविधप्रान्तभूमिप्रज्ञश्चरमदेहो भगवान् जीवन्मुक्तश्चतुर्थः । तेषामाद्यं तावद्योगिनमयोग्यत्वान्न स्थानिनः उपनिमन्त्रयन्ते । तृतीयस्तु जितभूतेन्द्रियत्वात्स्वयं पर्याप्तः, चतुर्थस्तु सर्वथा विरक्त इति तावपि न तदुपनिमन्त्रणगोचरौ भवितुमर्हतः । परिशेषाद् द्वितीय एव भगवानृतम्भरप्रज्ञोऽनुत्पन्नधर्ममेघस्तैरुपनिमन्त्र्यते, स चोपनिमन्त्र्यमाणः कदापि संगस्मयौ न कुर्यात्। किन्तु निश्चतमतिः समाधिमेव भावयेत् । अन्यथा तत्प्रार्थनया विषयेषु सक्तः पुनरधः पतिष्यति, स्मयाच्च सुस्थितंमन्यो न समाधिं भावयिष्यतीति भावः ॥ ५१ ॥

विवेकजज्ञानसाधनं संयममाह—

**"क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्"** ॥ ५२ ॥

**क्षणतत्क्रमयोः**=भिद्यमानस्य लोष्टादेरपकर्षावधिभूतपरमा-

णुवत्कालस्यापकर्षावधिभूतः पूर्वापरभागशून्योऽवयवविशेषः क्षणः, यावता वा कालेन चलितः परमाणुः परमाणुमात्रं स्वदेशगतिक्रामेदुत्तरं वा देशमुपसम्पद्येत, स कालः क्षणः, तत्प्रवाहाविच्छेदः तत्क्रमः, तयोः क्षणतत्क्रमयोः **संयमात्**=साक्षात्कारपर्यन्तात्संयमकरणाद् योगिनो **विवेकजम्**=अशेषविशेषैर्वस्तूनामितरेतरतो विवेचनं विवेकः, तत्पूर्वकं वक्ष्यमाणलक्षणं निखिलवस्तुगोचरं ज्ञानमुत्पद्यत इत्यर्थः ।

क्षणपरिणामिनो हि भावाः ऋते चिच्छक्तेः, अतो यदाऽयं योगी तेषां परिणामक्षणे, तत्क्रमे च साक्षात्कारावधिकं संयमं करोति, तदा तस्य क्षणतत्क्रमयोः साक्षात्कारे तदुपारूढेषु भावेष्वपि साक्षात्कारात्मकं ज्ञानमुत्पत्तुमर्हति । तत्साक्षात्कारे तदुपारूढपदार्थसाक्षात्कारस्यावश्यकत्वात् । तस्माद् यत् तत्र साक्षात्कारावधिकात्संयमकरणात् भगवतो योगिनो निखिलपदार्थगोचरं ज्ञानमुत्पद्यते, तदेव विविक्ताखिलवस्तुगोचरत्वाद् विवेकजं ज्ञानमिति भावः ।

तत्र विवेकजं ज्ञानमिति तान्त्रिकी परिभाषा । सांख्यानां योगानां च क्षणात्मकः कालो वास्तवः, तदन्यः सर्वोऽपि मुहूर्त्तादिकालोऽवास्तवः । वैशेषिकाणां तु महाकाल एवैको वास्तवः,

तदन्यः क्षणादिस्वरूपः सर्वोऽप्यवास्तवः । तमोगुणबहुलाहङ्कार-कार्यत्वं च तस्य सर्वेषां समानमिति विवेकः ॥ ५२ ॥

ननु विवेकजज्ञानतः किं भवति ? तत्राह—

" **जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः** " ॥ ५३ ॥

**तुल्ययोः**= तुल्यजातिलक्षणदेशयोर्वस्तुनो**र्जातिलक्षणदेशैः**= जातिर्गोत्वादि, लक्षणं कपिलत्वादि, देशः पूर्वादि, जात्या लक्षणेन देशेन **चान्यतानवच्छेदात्**=अन्यता भेदः, तदवच्छेदो निश्चयः, तस्यासम्भवाद् या **प्रतिपत्तिः**=अन्यतावच्छित्तिः, सा **ततः**=विवेकजज्ञानाद् भवतीत्यर्थः ।

जात्यादिभिर्हि त्रिभिर्लोके भावानामन्यत्वं प्रतिपद्यते—अयमस्मादन्य इति । यथा देशेन लक्षणेन च तुल्ययोर्गोगवययोर्गोत्वादिजात्या, देशेन जात्या च तुल्ययोर्गावोः कपिलत्वादिलक्षणेन, जात्या लक्षणेन च तुल्ययोरामलकयोः पूर्वादिदेशेनेति । यत्र पुनरेकस्मिन्नेव पूर्वादिदेशे निहितयोस्तुल्यामलकत्वगोलाकारत्व जातिलक्षणयोरामलकयोर्जात्यादिभिस्त्रिभिरन्यत्वं न प्रतिपत्तुं शक्यते, तत्रान्यताप्रतिपत्तिर्विवेकजज्ञानफलमिति भावः ।

एतेन परमाणुद्वयान्यताप्रतिपत्तिरपि विवेकजज्ञानतो व्याख्याता द्रष्टव्या ॥ ५३ ॥

**ननु** यस्य विवेकजज्ञानस्येदृशं फलं तस्य किं लक्षणं ? **तत्राह**—

**" तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् " ॥ ५४ ॥**

**तारकं**=स्वप्रतिभोत्थमनौपदेशिकं, **सर्वविषयं**=सर्ववस्तुगोचरं, **सर्वथाविषयम्**=अशेषावान्तरविशेषैरतीतानागतवर्तमाननिखिलवस्तुविषयम् **अक्रमं च**= युगपदेव करतलामलकवत्सर्वथा सर्वविषयं **चेति**=एवम्भूतं यज्ज्ञानं, तदेव **विवेकजं ज्ञानं**=विवेकजज्ञानवाच्यमित्यर्थः ।

एतद्विवेकजं ज्ञानं परिपूर्णं, नास्य क्वचित्कदाचित्कथञ्चित्किञ्चिदगोचरो जायते । अस्यैवांशः खलु संप्रज्ञातो योगप्रदीपः ऋतम्भरप्रज्ञावतीं मधुमतीं भूमिमादाय यावत्तस्य परिसमाप्तिरिति निश्चेयम् ॥ ५४ ॥

**ननु** यस्य विवेकजं ज्ञानं नोत्पन्नं, किं तस्य कैवल्यं न भवति ? **तत्राह** —

**" सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति " ॥ ५५ ॥**

इति शब्दः पादसमाप्तिमाह । **सत्त्वपुरुषयोः**=बुद्धिपुरुषयोः **शुद्धिसाम्ये**=शुद्धितौल्ये सति **कैवल्यं**=पुरुषस्य मोक्षो भवतीत्यर्थः ।

विवेकजं ज्ञानं भवतु, मा वा भूद् विवेकजं ज्ञानम्. सत्त्वपुरुषान्यताख्यातिरेव कैवल्यप्रयोजकत्वादावश्यकी । तदुत्पत्तौ बुद्धिसत्त्वस्य दग्धक्लेशबीजता पुरुषशुद्धिसमा शुद्धिः, पुरुषस्य च तदुपचरितप्रत्ययाविशेषाख्यभोगाभावः शुद्धिरिति विवेकः ।

सत्त्वपुरुषान्यताप्रत्ययोत्पत्तौ पुरुषस्याविद्या निवर्तते । तन्निवृत्तौ च तन्मूलाः रागादयः क्लेशाः न भवन्ति । तदभावे च कर्माभावः । तदभावे च जन्माभावः । तदभावे च दुःखात्यन्तनिवृत्तिः । चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुनः पुरुषस्य दृश्यत्वेनोपतिष्ठन्ते । तदेव कैवल्यं पुरुषस्य । तदा हि पुरुषः स्वरूपमात्रज्योतिरमलः केवली ब्रह्मानन्दमुपभुञ्जानो निराकुलमवतिष्ठते, न पुनर्दुःखमापद्यते ॥ ५५ ॥

**अङ्गत्रयं परिणामाः संयमोत्था विभूतयः ।**
**योग श्रद्धापयन्त्यस्ता पादेऽस्मिन् सम्यगीरिताः॥१॥**

इतिश्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां योगसूत्रवैदिकवृत्तौ विभूतिपादस्तृतीयः ॥३॥

---

ओ३म्

# कैवल्यपादः ।

**अथ** प्रथमद्वितीयतृतीयपादैर्योगतत्साधनतद्विभूतीर्व्युत्पाद्य तत्फलं कैवल्यं व्युत्पिपादयिषुश्चतुर्थं पादमारभमाणः पूर्वं तावत्पञ्चसु सिद्धचित्तेषु तद्भागीयं चित्तमवधारयितुं तत्प्रयोजिकां पञ्चप्रकारां सिद्धिमाह —

**" जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः " ॥ १ ॥**

**जन्मौषधिमन्त्रतपःसमाधिजाः** =जन्मजौषधिजा मन्त्रजा तपोजा समाधिजेति पञ्च **सिद्धयः**=ऐश्वर्य्यविशेषाः भवन्तीत्यर्थः।

**तत्र** क्रियात्मिका वा ज्ञानात्मिका वा सांसिद्धिकी सिद्धिः **जन्मजा** सिद्धिः, यथा पक्ष्यादीनामाकाशादिगमनरूपा, कपिलादीनां च ज्ञानरूपा। पारदादिभस्माभ्यवहरणाज्जाता कायसम्पत्-**औषधिजा** सिद्धिः। " **स्वाध्यायादिष्टदेवतासम्प्रयोगः** " (यो० २। ४४) इत्युक्ता सिद्धिः-**मन्त्रजा** सिद्धिः, " **काये-**

न्द्रियसिद्धिरशुद्धिक्षयात्तपसः" ( यो० २ । ४३ ) इत्युक्ता सिद्धिः, तपोजा सिद्धिः, विभूतिपादोक्ता निखिला सिद्धिः समाधिजा सिद्धिरिति विवेकः ॥ १ ॥

ननु मन्त्रतपःसमाध्यादितः कायेन्द्रियाणां पूर्वजातितो जात्यन्तरपरिणाम एव तज्जा सिद्धिर्वक्तव्या, स च कुतो भविष्यति? तत्राह—

" **जात्यन्तरपरिणामः प्रकृत्यापूरात्** " ॥ २ ॥

**जात्यन्तरपरिणामः**=मन्त्रादितो जायमानः कायेन्द्रियाणां पूर्वजातितो विलक्षणजातिकः परिणामः **प्रकृत्यापूरात्**=कायस्य प्रकृतिर्भूतपञ्चकम् , इन्द्रियाणां प्रकृतिरस्मिता, तयोरापूरः तज्जात्यनुकूलावयवान्तरैरनुप्रवेशः, तस्माद्भवतीत्यर्थः ।

मन्त्रादिजं धर्मादिकं निमित्तमपेक्षमाणाः कायेन्द्रियप्रकृतयः स्वं स्वं विकारमपूर्वावयवानुप्रवेशलक्षणेनापूरेणानुगृह्णन्ति, तत एव च पूर्वपरिणामापाय उत्तरपरिणामो भवतीति भावः ॥ २ ॥

ननु किमेतन्निमित्तमापूराय कायेन्द्रियप्रकृतीः प्रयोजयति ? किं वा तासां प्रतिबन्धमात्रं भिनत्ति ? तत्राह—

" **निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः, क्षेत्रिकवत्** " ॥ ३ ॥

**निमित्तं**=मन्त्रादिजं धर्मादिकं निमित्तं **प्रकृतीनां**=कायेन्द्रियप्रकृतीनाम**प्रयोजकम्**=आपूरे प्रयोजकं न, केवलं **वरणभेदस्तु**=वरणस्य तत्र प्रतिबन्धस्याधर्मादेर्भेदो बाध एव **ततः**=तस्मान्निमित्ताद् भवति, **क्षेत्रिकवत्**= यथा केदारात्केदारान्तरमापूरयन्तीनामपामप्रयोजकात्सतः क्षेत्रकान्निमित्तात् केवलं तत्रालवालाख्यस्य वरणस्य भेद इत्यर्थः ।

**यथा** ह्यद्भिरापूरणात्केदारात्केदारान्तरमापिप्लावयिषुः क्षेत्रको नापः प्रयोजयति=पाणिनाऽपकर्षति, केवलं तासामालवालाख्यमावरणमात्रमग्रतो भिनत्ति । भिन्ने च तस्मिन्नापः स्वयमेव स्वभावतः केदारान्तरमाप्लावयन्ति । तथैव धर्मादिकं निमित्तमपि न कायेन्द्रियप्रकृतीः प्रयोजयति, केवलमधर्मादिकमावरणमात्रं तासां भिनत्ति । तस्मिन् भिन्ने स्वयमेवेश्वरदत्तात्स्वभावात्तास्ताः प्रकृतयः स्वं स्वं विकारमापूरयन्तीति भावः ।

**तत्र** धर्मवदधर्मोऽपि प्रकृतीनां प्रवृत्तौ हेतुः । यदा हि तदावरणमधर्मं धर्मो निवर्तयति, तदा तासां शुद्धिपरिणामो भवति । यदा चाधर्मो धर्मं, तदाऽशुद्धिपरिणाम इति विवेकः ॥ ३ ॥

**ननु** यदा योगी स्वभोगार्थं कायेन्द्रियप्रकृत्यापूरेण युगपदनेकानि शरीरेन्द्रियाणि निर्मिमीते, तदा तेषां चित्तानि कुतो निर्मिमीते ? तत्राह—

" निर्माणचित्तान्यस्मितामात्रात् " ॥ ४ ॥

निर्मिमीते भगवान् योगीति शेषः । **निर्माणचित्तानि**=शरीरादिवत्स्वसंकल्पेन निर्मितानि चित्तानि निर्माणचित्तानि, तान्य**स्मितामात्रात्**=अत्र मात्रपदेन संकल्पद्वारा निमित्तकारणं मनो व्यावर्त्यते, चित्तापादानकारणभूतादहङ्कारान्निर्मिमीते भगवान् योगीत्यर्थः ।

अत्र प्रधानान्महत्तत्त्वं निर्मिमीते, ततश्चाहंकारं, ततश्च चित्तमिति क्रमोऽनुसन्धेयः ॥ ४ ॥

**ननु** तेषां चित्तत्वाविशेषात्प्रतिशरीरं चित्तान्तरवदेकचित्ताभिप्रायपुरस्सरप्रवृत्त्यनुपपत्तौ कथं योगिनस्ततो भोगः ? **तत्राह**—

" **प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्** " ॥ ५ ॥

निर्मिमीते भगवान् योगीति पूर्ववच्छेषः । चित्तानि निर्मिमाणो भगवान् योग्य**एकं**=पूर्वसिद्धमेकं **चित्तम्**=आत्मनश्चित्तरूपत्व**मनेकेषां**=शरीरानेकत्वादनेकेषां तेषां निर्माणचित्तानां **प्रवृत्तिभेदे**=प्रतिशरीरं प्रवृत्तिविशेषे **प्रयोजकं**= नायकं निर्मिमीत इत्यर्थः ।

**तथा च** सर्वेषां तेषां पूर्वसिद्धयोगिचित्तसत्त्वैकनायकाधिष्ठ-

यत्वात्प्रतिशरीरं तदभिप्रायपुरस्सरैव प्रवृत्तिर्न चैत्रमैत्रादिचित्तव-त्स्वतन्त्रेति न योगिनो भोगानुपपत्तिरिति भावः ॥ ५ ॥

एवं जन्मजादिभेदेन पञ्चधा सिद्धिमभ्यधात्, संप्रति तद्भेद-भिन्नेषु पञ्चसु सिद्धचित्तेष्वपवर्गभागीयं चित्तमवधारयन्नाह—

**"तत्र ध्यानजमनाशयम्"** ॥ ६ ॥

**तत्र**=पञ्चसु सिद्धचित्तेषु **ध्यानजं**=ध्यानं समाधिः, तज्ज-न्यसिद्धिसिद्धम**नाशयं**=क्लेशवासनाः कर्मवासनाश्चाशयाः, य-तद्रहितं चित्तं कैवल्यभागीयमित्यर्थः ।

पञ्चविधसिद्धचित्तानां मध्ये यदवासनं ध्यानजं चित्तं, तदेव कैवल्ययोग्यं, नेतरन्मन्त्रादिसिद्धं चित्तम् । तस्य पुण्यपापाख्य-कर्माभिसंबन्धहेतुक्लेशकर्मादिवासनासद्भावादिति भावः ॥ ६ ॥

**ननु** योगीतरवद् योगिनोऽपि कर्माभिसंबन्धदर्शनात्कुतस्त-च्चित्तमेवैकमनाशयं, न चेतरेषां ? **तत्राह**—

**"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्"** ॥ ७ ॥

**योगिनः**=योगसिद्धचित्तस्य भगवतो योगिनः **कर्म**= समाध्यादिकं यत्कर्म, **तदशुक्लाकृष्णं**=न शुक्लं पुण्यं—फल-संन्यासात्, न वा कृष्णं पापम्, अनिषिद्धत्वात् **अपि तु** तदुभय-

विलक्षणम् । **इतरेषां** = योगीतरेषां कर्मक्लेशादिवासनापूर्वकत्वात **त्रिविधं** = शुक्लं, कृष्णं, शुक्लकृष्णमिति त्रिप्रकारमित्यर्थः।

**यद्यपि** योगिनोऽपि कर्माभिसम्बन्धो वर्तते, **तथापि** तस्य यत्कर्म, तन्न क्लेशादिवासनापूर्वकम्, **अपि तु** तदपूर्वकम्। दग्धक्लेशकर्मवासनत्वात् । अत एव तदात्मनि सम्बध्यमानमपि तत्कर्म न तच्चित्तस्य साशयत्वे प्रयोजकम् । इतरेषां तु तद्विपरीतं कर्म त्रिविधम् । अतो नानाशयं तच्चित्तम्, अपि तु साशयमिति भावः ।

**तत्र** तपःस्वाध्यायध्यानादिकं सात्त्विकं कर्म शुक्लं, ब्रह्महत्यादिकं तामसं कर्म कृष्णं, परपीडानुग्रहात्मकत्वाद् यज्ञादिकं राजसं कर्म शुक्लकृष्णमिति विवेकः ॥ ७ ॥

**ननु** योगीतरेषां सवासनचित्तत्वेन कर्मविपाकावश्यम्भावादेकजातितो जात्यन्तरप्राप्तौ निखिलवासनाभिव्यक्तौ तज्जातावेव जातिमात्रोचितो भोगः प्रसज्येत, तथाच मनुष्योऽपि वृषदंशोपभोगं भुञ्जीत ? **तत्राह**—

**"ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्"** ॥ ८ ॥

**ततः** = तस्माद्विपच्यमानात्पूर्वोक्तात्त्रिविधात्कर्मणस्**तद्विपा-**

**कानुगुणानामेव** = वासनान्तराभिव्यक्तिव्यावृत्यर्थमवधारणम्, तस्य त्रिविधस्य कर्मणो यो विपाको जात्यायुर्भोगलक्षणः फलभेदः, तदनुगुणानाम् अनुरूपाणामेव **वासनानां** = तत्तज्जातियोग्यभोगसंस्काराणाम **भिव्यक्तिः**=तद्गोचरस्मृतिजननलक्षणाभिमुख्यं भवतीत्यर्थः ।

कर्म हि विपच्यमानं यज्जातीयकं विपाकमारभते, तस्यानुगुणमेव वासनाराशिमभिव्यनक्ति, नाननुगुणमन्यान्यकर्माभिव्यञ्जनीयम् । अत एव जातमात्रो जन्तुः स्वस्वजातियोग्यमेवोपभोगं भुङ्क्ते, यथोष्ट्रपोतः कण्टकानेव भक्षयति, वृषदंशार्भकश्च मूषकान्, नान्यस्य भोगमन्यः करोति । तस्मान्न कुत्राप्यतिप्रसंग इति भावः ॥८॥

**ननु** मनुष्यस्य प्रायणानन्तरं कर्मपरिपाकादधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यं, न शतसहस्रजात्यादिव्यवहिताया मार्जारवासनायाः । व्यवहिताव्यवहितयोरव्यवहिताभिव्यक्तेरेवौचित्यात्, तत्राह—

**"जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्" ॥ ९ ॥**

वासनानामित्यनुवर्तते । **जातिदेशकालव्यवहितानामपि**= जात्या मध्यवर्तिना बहुजन्मना, देशेन पूर्वोत्तरादिना देशेन, का-

लेन शतसहस्रवर्षकेण कालेन च व्यवहितानाम् अन्तरितानामपि वासनानामानन्तर्य्यम्=फलतोऽव्यवधानमस्ति, कुतः ? **स्मृतिसंस्कारयोः** = स्मरणवासनयो**रेकरूपत्वात्** = समानविषयत्वनियमादित्यर्थः ।

अभिव्यक्ताः खलु वासनाः स्वकार्य्यं कुर्वन्ति, नानभिव्यक्ताः । तासामभिव्यक्तौ च व्यवधानमव्यवधानं वा न कारणम्, अपि चाभिव्यञ्जकसान्निध्यम् । यासां ह्यभिव्यञ्जकसान्निध्यं भवति, ताः अभिव्यक्ताः भवन्ति, न चेतराः अव्यवहिता अपि । मार्जारवासनानां चाभिव्यञ्जकं तन्निमित्तभूतपूर्वमार्जारकर्माशयजातीयमधुना पच्यमानं मार्जारं कर्म विद्यते, न मनुष्यवासनानां । यतः कर्मनिमित्ता वासना भवति, वासनानिमित्ता च स्मृतिः, स्मृतेः पुनर्वासना, वासनायाश्च पुनः कर्म । तच्च यदा स्वाभिव्यञ्जकेन देशकालादिना निमित्तेन फलदानायाभिव्यज्यते, तदा द्रागित्येव पूर्वानुभूतमार्जारविपाकाभिसंस्कृताः वासनाः उपादायैवाभिव्यज्यते । तेनाभिव्यक्ताश्च सन्निहितास्ताः वासनाः पूर्वस्मिन् जन्मनि यद्विषयाः अनुभवेन सञ्चितास्तद्विषयामेवानन्तर्य्यादस्मिन् वर्तमाने मार्जारजन्मनि स्मृतिं जनयन्ति, न मनुष्यजन्मानुभूते व्यवहिते विषये स्मृतिसंस्कारयोरेकरूपत्वनियमादिति भावः ॥ ९ ॥

**ननु** सर्वतः पूर्वस्मिन् जन्मनि वासनानामभावेन प्रारब्धकर्म-

तोऽनभिव्यक्तौ कथं स्वजातियोग्योपभोगे निखिलजीवप्रवृत्तिः ? तत्राह—

"तासामनादित्वं चाशिषो नित्यत्वात्" ॥ १० ॥

**तासां** = वासनानामनादित्वं **च** = निदर्शनार्थे चकारः, यथाऽऽनन्तर्य्यं तथाऽनादित्वमपि, कुतः, ? **आशिषः** = मा न भूवं हि भूयासमित्यभिनिवेशात्मिकायाः आत्माशिषो **नित्यत्वात्** = प्रतिजन्माव्यभिचारेण वर्तमानत्वादित्यर्थः ।

मा न भूवं हि भूयासमिति योऽयमात्माशीरूपो मरणत्रासः, न सोऽननुभूतमरणदुःखस्य सम्भवति । न च जातमात्रेण बालकेनैतन्मरणजं दुःखमस्मिन् जन्मनि प्रत्यक्षानुमानागमैरनुभूयते, येन स्वाभाविकः स स्यात्, अपि च स्मर्य्यते । अत एवासौ परेण खड्गादिप्रहारे मरणजं दुःखं संस्मरन् वेपमानः उपलभ्यते । न चेयं स्मृतिस्तस्य वासनामन्तरेण संभवति । वासना चानुभवमन्तरेण । न चानुभवोऽप्यस्यैहिक इति प्राग्भवीयः परिशिष्यते । तत्रापि चेयमेवात्माशीरित्याशिषो नित्यत्वात्तद्धेतुवासनानामनादित्वं निर्बाधम् । तन्निर्बाधे च न किमपि सर्वतः पूर्वं जन्म । वासनावत्तद्धेतुजन्मनोऽप्यनादित्वादिति भावः ॥ १० ॥

**ननु** वासनानामनादित्वे चिच्छक्तिवत्कदापि तदभावो न स्यात् ? तत्राह—

**" हेतुफलाश्रयालम्बनैः संग्रहीतत्वादेषामभावे तदभावः " ॥ ११ ॥**

तासामित्यनुवर्तते । तासां वासनानां धूमस्येव वह्निना **हेतुफलाश्रयालम्बनैः** = अविद्यादयः क्लेशाः शुक्लादीनि च कर्माणि हेतुः, जात्यायुर्भोगाः फलं, साधिकारं चित्तमाश्रयः, शब्दादिविषया आलम्बनं, हेतुश्च फलं चाश्रयश्चालम्बनं च, तानि तथा, तैर्हेत्वादिभिः **संगृहीतत्वात्** = सञ्चितत्वा**देषां** = हेत्वादीना**मभावे** = प्रसङ्ख्यानेन विनाशे सति **तदभावः** = तासां वासनानामभावो विनाशो भवतीत्यर्थः ।

क्लेशमूलो हि कर्माशयः । क्लेशाश्चाविद्यामूलाः । तस्मादविद्यैव रागद्वेषधर्माधर्मसुखदुःखरूपषडरसंसारचक्रस्य नेत्री वासनानां हेतुः । फलाश्रयालम्बनानि तु तयैव व्याप्तानि, तन्निवृत्त्यैव निवर्तन्ते । तस्याश्च प्रसङ्ख्यानेन विनाशे तत्संश्रयाणां वासनानामनादित्वेऽपि भवति विनाशः । विनाशकारणसद्भावात् । चिच्छक्तिस्तु विनाशकारणाभावान्न जातु विनष्टुमर्हतीत्यनुदाहरणमिति भावः ॥ ११ ॥

**ननु** योगानां सत्कार्य्यवादित्वेन विनाशकारणसद्भावेऽपि कथं वासनानां विनाशः ? **तत्राह**—

**" अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् " ॥ १२ ॥**

**अतीतानागतं** = विनाशं गतमतीतं, भविष्यदभिव्यक्तिकमनागतम्, अतीतं चानागतं च धर्मद्वयं **स्वरूपतः** = अतीतानागतत्वलक्षणस्वस्वरूपतो**ऽस्ति** = वर्तमानधर्मवद् धर्मिणि विद्यते, कुतः ? **धर्माणां** = कार्य्यभूतानां महदादीनां, प्रकृतत्वाद्वासनादीनां वा, धर्माणाम**ध्वभेदात्** = अध्वना भूतभविष्यद्वर्तमानलक्षणेन कालेन भेदात् त्रिविधभेदाभ्युपगमादित्यर्थः ।

**तथा च** वासनानां विनाशोऽत्र न स्वरूपतोऽपायः, अपि चातीततामात्रम् । अतो न सत्कार्य्यवादक्षतिः । नवाऽतीतत्वेन तत्सत्त्वे पूर्ववत्साशयं चित्तं भवितुमर्हति । वर्तमानलक्षणानामेव तासां तत्प्रयोजकत्वात् । अतीतानां चानागतवत्पुनरुत्थानानभ्युपगमादिति भावः ॥ १२ ॥

**नन्वमी सर्वे धर्माः परमार्थतः किमात्मानः सन्ति ? तत्राह—**

**" ते व्यक्तसूक्ष्मा गुणात्मानः " ॥ १३ ॥**

**व्यक्तसूक्ष्माः** = वर्तमानाः व्यक्ताः, अतीतानागताः सूक्ष्माः, व्यक्ताश्च सूक्ष्माश्च, **ते** = त्र्यध्वानो महदादयः सर्वे धर्माः **गुणात्मानः** = गुणानां सत्त्वरजस्तमसां परिणामविशेषत्वात्तत्र

कारणत्वेनानुगताः गुणाः एवात्मा परमं रूपं येषां ते तथा, परमार्थतो गुणस्वरूपा इत्यर्थः ।

तत्र योगानां प्रकृतिविकारयोर्भेदाभेदाभ्युपगमात्प्रकृतिभूताः गुणाः परिणामिनित्याः । तद्विकाराश्च सर्वेऽमी भावाः प्रकृतिभूतगुणत्रयाभिन्नत्वान्नित्याः सन्तोऽपि स्वस्वरूपतो न नित्याः, किंतु नश्वराः । पुरुषास्तु कूटस्थनित्या इति विवेकः ॥ १३ ॥

ननु गुणानां त्र्यात्मकत्वात्कथम् "एकः शब्दः, एकमिन्द्रियम्, एका भूः, एकं तोयम्" इति तदात्मकवस्तुनः शब्दादेरेकत्वं ? तत्राह–

**"परिणामैकत्वाद्वस्तुतत्त्वम्" ॥ १४ ॥**

**परिणामैकत्वात्** = वर्तितैलानलानामिवाङ्गाङ्गिभावेन मिलितानां गुणानां त्र्यात्मकत्वेऽपि प्रदीपवत्तत्परिणामस्यैकत्वात् एकात्मकत्वाद्**वस्तुतत्त्वं** = वस्तुनः तत्परिणामत्वेन तदात्मकस्य शब्दादेर्वस्तुनस्तत्त्वम् एकत्वमित्यर्थः ।

मृत्तन्तुदुग्धानामिव समप्रधानभावेन मिलितानामेव बहूनां परिणामैकत्वं विरुध्यते, नाङ्गाङ्गिभावेन मिलितानां पुरुषार्थतन्त्राणां बहूनाम् । अतो गुणानां बहुत्वेऽपि तत्परिणामैकत्वे नास्ति कश्चिद् विरोध इति भावः ।

**तत्र** सत्त्वप्रधानानां गुणानामिन्द्रियमेकः परिणामः, तमःप्रधानानां च विषय इति विवेकः ॥ १४ ॥

**ननु** विज्ञानातिरिक्तं किमपि वस्तु नास्ति, कुतस्त्र्यध्वानो धर्माः ? कुतश्च ते गुणात्मानः ? तत्राह—

**"वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः" ॥१५॥**

**वस्तुसाम्ये पि**=वस्तुनो विषयस्य साम्ये समानत्वे अभेदेऽपीति यावद्, **चित्तभेदात्**=चित्तं–ज्ञानं–विज्ञानं–बुद्धिरिति बाह्यानामनर्थान्तरम्, तद्विषयाणां चित्तानां ज्ञानानां भेदात् भेददर्शना-**त्तयोः** = वस्तुचित्तयोर्ग्राह्यग्रहणात्मकयोः **विभक्तः पन्था**=भिन्नो मार्गः परस्परं भेद इति यावदित्यर्थः ।

विज्ञानवादिनस्तावद् बाह्याश्चित्तमेवैकं तत्त्वं, तदपि नाना, क्षणिकं च, तद्व्यतिरिक्तं च यदिदं दृश्यमानं घटपटादिवस्तुजातं चैत्यं, तन्न स्वस्वरूपतः सद्, अपि च नितान्तालीकं, प्रतिचित्तमनादिवासनया परिकल्पितं चित्तमात्रकारणकत्वाच्चित्तमात्रमेव, न चित्तव्यतिरिक्तमिति मन्यन्ते । तन्न युक्तम् । व्यतिरेकेण दर्शनात् । चेच्चित्तव्यतिरिक्तं चैत्यंवस्तु किमपि न भवेदपि तु तन्मात्रमेव स्यात्, तदा नैकं वस्तु नानाचित्तैरवलम्ब्येत । तैरवलम्ब्यमानं च तत्पुनस्तदेवेति न प्रत्यभिज्ञायेत । एकचित्तपरिकल्पितस्य चित्तमात्रस्य तस्य चित्तान्तरैर्विषयीकर्तु-

मशक्यत्वात् । दृश्यते तु नानाचित्तावलम्बनमेकं वस्तु । तत्र च तदेवेति प्रत्यभिज्ञानम् । अतोऽस्ति चित्तव्यतिरिक्तं किमपि स्वप्रतिष्ठं वस्तु चैत्यमिति भावः ॥ १५ ॥

ननु न वयं चित्तव्यतिरिक्तं चैत्यं वस्तु सर्वथा व्यासेधामः, अपि तु तस्य चित्तक्षणतः पूर्वोत्तरक्षणयोः सद्भावम्, यतोऽस्माकं यदा चित्तं तदैव चैत्यं, नान्यदा चैत्यम् । अत एव न तन्नानाचित्ततन्त्रम्, अपित्वैकचित्ततन्त्रमिति, तत्राह—

**" न चैकचित्ततन्त्रं वस्तु, तदप्रमाणकं तदा किं स्यात् " १६ ॥**

**वस्तु** = घटपटादि यद् ग्राह्यं वस्तु, **तदेकचित्ततन्त्रम्** = एकमेव चित्तं ज्ञानं तन्त्रं ग्राहकतया प्रधानं यस्य तत्तथा, एकचित्ताधीनम् एकचित्तसमयमात्रभावीति यावत् **न च** = नैव भवितुमर्हति, कुतः ? **तदा** = यदा तदेव चित्तं विषयान्तरे संलग्नं, निरुद्धं वा, तस्मिन् काले **तत्** = तद्ग्राह्यं **अप्रमाणकं** = प्रमाणेन चित्तेन ग्रहणाभावान्निष्प्रमाणकं सत् **किं स्यात्** = किं विनश्येत् ?, आहोस्वित्पूर्ववत्तिष्ठेद् ? इति प्रश्न इत्यर्थः ।

यत्तावच्चित्ताद् व्यतिरिक्तं तन्मात्रैकतन्त्रं चैत्यं वस्त्वभ्युपगम्यते, तत्किं चित्तकारणकं स्याद् ? उतान्यकारणकं ? । तत्राद्ये विज्ञा

नवादप्रसङ्गः । स तु दूषित एव । द्वितीये ग्राहकाभावेऽपि कुतोऽन्तरेण मुद्गरादिपातं तदकस्माद्विनश्येत् । न हि ग्रहणाभावे ग्राह्यं विनश्यतीति क्वचिदस्ति दर्शनम् । तिष्ठच्चेत् ? तदा कथमेकचित्ततन्त्रं स्यात् । कथं वा सर्वचित्तसाधारणं न स्यात् । सर्वचित्तसाधारण चोपलभ्यते । तस्मादयुक्तमेतद्– यदेकचित्ततन्त्रं वस्त्विति भावः ।

**एतेन** शाङ्कराणां दृष्टिसृष्टिवादोऽपि गतार्थ इति ध्येयम् ॥१६॥

**ननु** चित्तव्यतिरिक्तं चेत्तं स्वतन्त्रं घटपटादिग्राह्यं वस्तु, तदा तत् सवदा चित्तेन कुतो न ज्ञायते ? तत्राह–

**" तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् " ॥ १७ ॥**

**चित्तस्य**=चित्तपरस्य वस्तुमात्रज्ञानोपजनने **तदुपरागापेक्षित्वात्**= घटपटादिग्राह्यवस्तुपरोऽत्र तच्छब्दः, तस्योपरागः चक्षुरादीन्द्रियद्वारा चित्तसत्त्वं स्वस्मिन् संयोज्य तत्र स्वाकारसमारोपः, तदपेक्षितः तदपेक्षावत्त्वं, तस्माद् इन्द्रियद्वारा वस्तुसम्बन्धापेक्षावत्त्वाद् **वस्तु**=घटपटादिग्राह्यवस्तु **ज्ञाताज्ञातं**=सति सम्बन्धे ज्ञातमसति चाज्ञातमित्यर्थः ।

अयस्कान्तमणिकल्पाः हि घटपटादिविषयाः । ते चायस्सधर्मकं परिणामशीलं चित्तमिन्द्रियद्वाराऽऽकृष्य स्वस्मिन् संयोज्यो

परञ्जयन्ति लाक्षारसा इव वस्त्रम् । अतो येन विषयेणोपरक्तं चित्तं स ज्ञातो भवति, येन चानुपरक्तं सोऽज्ञात इति भावः ॥ १७ ॥

नन्वेवं तत्तद्विषयाकाराश्चित्तवृत्तयोऽपि सर्वदा न ज्ञायेरन् ? तत्राह —

**“ सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ” ॥ १८ ॥**

**चित्तवृत्तयः**= तत्तद्विषयाकाराश्चित्तसत्त्वप्रत्ययाः **सदा**= सर्वदा **ज्ञाताः**= गृहीताः एव भवन्ति, न कदाचिदगृहीताः, कुतः ? **तत्प्रभोः**=तस्य सवृत्तिकस्य चित्तस्य प्रभोः स्वामिनः भोक्तुः **पुरुषस्य**= पुरुषात्मनो**ऽपरिणामित्वात्**=चित्तवत्परिणामित्वाभावादित्यर्थः ।

चेच्चित्तवत्तत्प्रभुः पुरुषोऽपि परिणामी भवेत् तदा शब्दादिविषयवत्तस्य तद्विषयाश्चित्तवृत्तयोऽपि ज्ञाताज्ञाताः स्युः । परिणामित्वे कदाचिदन्धभावस्यापि सम्भवात् । परं न पुरुषः परिणामी । कूटस्थनित्यत्वात् । अत एव तस्य चित्तवृत्तयः सदा ज्ञाता एव भवन्ति नाज्ञाता इति भावः ।

**एतेन** विषयचित्तयोरिव चित्तपुरुषयोः परिणामित्वापरिणामित्वाभ्यां व्यतिरेकोऽपि प्रतिपादित इति वेदितव्यम् ॥ १८ ॥

ननु चित्तमेवात्मा, नास्ति तद्व्यतिरिक्तः कश्चन तत्प्रभुरपरिणामी पुरुषः, तच्च स्वप्रकाशं क्षणिकं च, तत्राह—

" नतत्स्वाभासं दृश्यत्वात् " ॥ १६ ॥

**तत्**=चित्तं **स्वाभासं**=स्वप्रकाशं **न**=न भवति, कुतः ? **दृश्यत्वात्**=दर्शनविषयत्वाद्, जडत्वात्, परिणामित्वात्, घटपटादिवदित्यर्थः ॥ १९ ॥

**किञ्च—**

" **एकसमये चोभयानवधारणम्** " ॥ २० ॥

क्षणिकविज्ञानवादिमतेन दूषणान्तरमेतदिति सूचनाय चकारः । **एकसमये**=युगपद् एकस्मिन् क्षणे चो**भयानवधारणं**=स्वपरयोश्चित्ताचित्तयोरुभयोरवधारणं ग्रहणं न स्यादित्यर्थः ।

**चित्तं** हि—क्षणिकं, तच्चोत्पत्तिक्षणमात्रावस्थायि, नोत्पत्तिक्षणतः परस्मिन् क्षणे तिष्ठति । या चास्योत्पत्तिः सैव क्रिया, सैव च कारकम् क्षणिकविज्ञानवादिनस्ते, नान्यमतवत्पूर्वमुत्पत्तिस्ततः क्रिया ततः कारकम् । " **भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते** " इत्युक्तेः । तच्च ययोत्पत्तिलक्षणया क्रियया स्वात्मानमवधारयिष्यति, न तयैव परमर्हति कथञ्चिदवधारयितुम् । अविलक्षणव्यापाराद्विलक्षणकार्य्यद्वयानुत्पत्तेः । न च तस्मिन्नेव क्षणे

सम्भवति व्यापारान्तरम् । उत्तरस्मिन् क्षणे च तत्स्वयमेव नास्ति, कुतः परावधारणमिति क्षणिकविज्ञानवादिनस्ते युगपच्चित्तचैत्योभयावधारणं कथमपि न सम्भवेदिति भावः ॥ २० ॥

**ननु** चित्तेन चैत्यं दृश्यतां, चित्तं च चित्तान्तरेण समनन्तरेण, को दोषः ? **तत्राह**—

**"चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः, स्मृतिसङ्करश्च" ॥ २१ ॥**

**चित्तान्तरदृश्ये**=अन्यच्चित्तं चित्तान्तरं, तेन दृश्ये ग्राह्ये पूर्वस्मिन् चित्तेऽभ्युपगम्यमाने **बुद्धिबुद्धेः**=वृत्तिज्ञानमत्र बुद्धिः, तदेव च विज्ञानात्मवादिनां चित्तम्, चित्तगोचरचित्तस्य चित्तत्वाविशेषाच्चित्तान्तरेण ग्रहणे तस्यापि चित्तान्तरेणेत्य**तिप्रसङ्गः**= चित्तानन्त्यं प्रसज्येत, ततः **स्मृतिसङ्करश्च**=तज्जनितस्मृतीनां युगपदुद्भूतानामियं नीलविषया स्मृतिरियं च नीलचित्तविषया स्मृतिरियं च नीलचित्तचित्तविषया स्मृतिरित्येवं विवेकाभावश्च प्रसज्येतेत्यर्थः ।

**तत्र** पूर्वं नीलविषयं चित्तमेकं, तस्य चित्तान्तरदृश्यत्वात्तद्विषयं नीलचित्तचित्तं द्वितीयं, तस्यापि चित्तत्वाविशेषेण चित्तान्तरवेद्यत्वात्तद्विषयं नीलचित्तचित्तचित्तं तृतीयं, तस्यापि पूर्वव-

च्चित्तान्तरविषयत्वात्तद्विषयं नीलचित्तचित्तचित्तचित्तं तुरीयमित्येवमेकविषयानुभववेलायां चित्तानन्त्यप्रसक्तिरेको दोषः, यथा चित्तं तथैव स्मृतिरिति नियमः, चित्तानि चानन्तानि, ततः संस्कारोद्बोधे युगपदनन्तस्मृतिरिति विवेकग्रहाभावो द्वितीयो दोष इति विवेकः ॥ २१ ॥

**ननु** यदि चित्तं न स्वाभासं, नापि चित्तान्तरदृश्यं, तदा तत्संवेदनं पुरुषेणापि कथं स्यात्, तस्येन्द्रियवत्प्रतिसङ्क्रमाभावाच्चित्तेन सम्बन्धानुपपत्तेः ? **तत्राह—**

**"चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" ॥ २२ ॥**

**अप्रतिसङ्क्रमायाः**=विषयसम्बन्धहेतुर्वृत्त्यात्मकः सञ्चारः प्रतिसङ्क्रमः, स नास्त्यपरिणामित्वाद्यस्याः सा तथा, तस्याः अप्रतिसञ्चारायाश्**चितेः**=चिच्छक्तेः चिद्वपुषो भोक्तुः पुरुषस्य स्वामिन इति यावत्, **तदाकारापत्तौ**=तच्छब्दोऽत्र स्वभूतं चित्तमाह, तत्र प्रतिबिम्बितत्वेन तदाकारसमानाकारताप्राप्तौ यत्प्राप्तचैतन्यप्रतिबिम्बस्य चित्तस्यानुकारिमात्रतया तद्गोचरतद्वृत्त्यविशिष्टवृत्तित्वं, तदेव तस्याः **स्वबुद्धिसंवेदनं**=पुरुषस्य स्वामिनः स्वभूतस्य भोग्यस्य बुद्धेः चित्तस्य संवेदनं दर्शनमित्यर्थः ।

यद्यप्यपरिणामित्वादप्रतिसङ्क्रमः पुरुषो नेन्द्रियवद्विषयेण चित्तेन सम्बध्यते, तथापि सन्निधिमात्रात्तत्र प्रतिबिम्बितस्तच्छायापत्त्या तत्समानाकारतामापन्नः पश्यन्तीं तद्वृत्तिमनुपश्यन्निव भवति चित्तस्य द्रष्टा, चित्तं च तेन दृश्यमिति भावः ॥ २२ ॥

**ननु** यदि पुरुषसंवेद्यं चित्तं, पुरुषश्च ततो व्यतिरिक्तो दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यत्वाद् द्रष्टा स्वतः सिद्धोऽस्ति, तदा कस्मात् विज्ञानवादिनश्चित्तमेव द्रष्टृ दृश्यं चाहुः ? **तत्राह**—

**" द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् " ॥ २३ ॥**

यत इति शेषः। यस्माद् **द्रष्टृदृश्योपरक्तं**=चेतनः पुरुषो द्रष्टा, शव्दादिविषयजातं दृश्यं, ताभ्यामुपरक्तं तत्प्रतिबिम्बद्वारा सम्बद्धं सत् **सर्वार्थं**=ग्रहीतृग्रहणग्राह्यभेदभिन्नसर्वार्थाकारं **चित्तं**=चित्ततत्त्वमित्यर्थः ।

यथा हि पार्श्वद्वयस्थयोर्जवेन्द्रनीलयोः प्रतिबिम्बनादात्मीयेन रूपेणैकः स्फटिको मणिस्त्रिरूप इव प्रतिभासते, तथैव ग्रहीतृग्राह्यात्मनोर्द्रष्टृदृश्ययोः प्रतिबिम्बनादात्मीयेन ग्रहणात्मकेन रूपेणैकं चित्तं त्रिरूपमिवावभासते । तस्य च त्रैरूप्येणावभासनमालक्ष्य विवेकग्रहाभावाद् भ्रान्ताः किल विज्ञानवादिनश्चित्तमेवात्मानं विषयं चाहुः । अतोऽनुकम्पनीयास्ते मुग्धाः । यतो द्रष्टृदृश्योपरक्तं सर्वार्थं चित्तमेव तेषां भ्रान्तिकारणमिति भावः ॥ २३ ॥

**ननु** भोगहेतुभिरनेकाभिर्वासनाभिश्चित्रितत्त्वाल्लोकसिद्धं चित्तमेवात्माऽस्तु, किं तद्व्यतिरिक्ताप्रसिद्धभोक्तृपुरुषाभ्युपगमेन गौरवकरेण ? तत्राह—

**" तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् "** ॥ २४ ॥

**असङ्ख्येयवासनाभि**:=असङ्ख्येयाभि: संख्यातुमशक्याभिर्वासनाभि: क्लेशकर्मवासनाभिर्विपाकप्रयोजिकाभि**श्चित्रमपि**=चित्रीकृतमपि तद्=चित्तं **परार्थं**=पर: पुरुषः, तस्य भोगापवर्गायैव-भवति, न स्वार्थं, येनात्मा स्यात् । कुत: ? **संहत्यकारित्वात्**=देहेन्द्रियादिभि:सहकारिभि: संभूयार्थक्रियाकारित्वात्, सदनादिवदित्यर्थः ।

यद्यप्यसङ्ख्येया: क्लेशकर्मवासनास्तदधीना: विपाकाश्च चित्तमेवाश्रयन्ते, तदाश्रयतया च तदेव भोक्त्रापतितम् , तथापि न तत्परमार्थतो भोक्तृ भवितुमर्हति । तस्य संहत्यकारित्वेन परार्थत्वावगमात् । अतो यस्मै परस्मै तद्भोगापवर्गार्थौ संहत्य साधयति सदनादिवत्, स एव परो भोक्ता पुमानिति भाव: ॥२४॥

**ननु** योऽयं जन्मादिसिद्धिमुखेन कैवल्ययोग्यं चित्तमवधार्य्य तस्मादर्थविवेकपूर्वक: कैवल्यमूलबीजभूतो द्रष्टु: पुरुषस्य युक्तिमयो विवेको दर्शित:, तद्दर्शनशीलस्याधिकारिपुरुषस्य पुनः किं भवति ? **तत्राह**—

**" विशेषदर्शिनः आत्मभावभावनाविनिवृत्तिः"॥ २५ ॥**

**विशेषदर्शिनः**=पूर्वप्रदर्शितश्चित्तसत्त्वपुरुषयोर्युक्तिमयोविवेको विशेषः, तं गुरूपदेशाद्योगाङ्गानुष्ठानेन द्रष्टुं साक्षात्कर्तुं शीलमस्य स तथा, तस्य विवेकसाक्षात्कारिणः कुशलस्याधिकारिपुरुषस्या**त्मभावभावनाविनिवृत्तिः**=आत्मनः स्वस्य भावः भूतभविष्यद्वर्तमानकालिकं देहेन्द्रियादिभिः सम्बन्धलक्षणं जन्म, तस्य भावना कोऽहमासं, कथमहमासं, किंस्विदिदं, कथंस्विदिदं, के भविष्यामः, कथं वा भविष्याम इति जिज्ञासा, तस्या विनिवृत्तिः विशेषेण निवर्तनं भवतीत्यर्थः ।

**यदा** ह्ययं चित्तसत्त्वपुरुषयोर्विशेषं साक्षात्पश्यति, तदा जानाति सम्यग् " एष सर्वश्चित्तस्यैव विचित्रः परिणामो न पुरुषस्य, स त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्टः" इति । ततोऽस्य कुशलस्य भवत्यात्मभावभावनाविनिवृत्तिरिति भावः ॥२५॥

**नन्वा**त्मभावभावनाविनिवृत्तौ विशेषदर्शिनोऽस्य कुशलस्य कीदृशं चित्तं भवति ? तत्राह —

**"तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्" ॥ २६ ॥**

**तदा**=आत्मभावभावनाविनिवृत्तौ तत्पश्चादस्य विशेषदर्शिन**श्चित्तं**=चित्तसत्त्वसलिलं **विवेकनिम्नं**=विवेक एव निम्नो वहनयोग्यो निम्नप्रदेशो यस्य, तत्तथा, **कैवल्यप्राग्भारं**=कैवल्यं

मोक्षः, स एव प्राग्भारो—वहनस्यावधिभूत उच्चप्रदेशो यस्य, तत्तथा भवतीत्यर्थः ।

यच्चित्तमस्य पूर्वमज्ञानमार्गसञ्चारि विषयाभिमुखमासीत्, तत्तादा विवेकमार्गसञ्चारि कैवल्याभिमुखं भवतीति भावः ॥२६॥

**ननु** विवेकनिम्नं चेच्चित्तं, तदा कदापि तत्र व्युत्थानप्रत्यया न भवेयुः । दृश्यन्ते तु विवेकिनोऽपि व्युत्थानप्रत्ययाः । तत्राह—

**"तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः"** ॥ २७ ॥

**तच्छिद्रेषु**=तस्य विवेकप्रत्ययस्य छिद्रेषु-अन्तरालेषु **प्रत्ययान्तराणि**=विवेकप्रत्ययादन्येऽहं मम जानामि न जानामीत्यादिरूपाः व्युत्थानप्रत्ययाः **संस्कारेभ्यः**=व्युत्थानानुभवजन्येभ्यो व्युत्थानसंस्कारेभ्यो भवन्तीत्यर्थः ॥ २७ ॥

**ननु** सत्यपि विवेकप्रत्यये चेद् व्युत्थानसंस्काराः प्रत्ययान्तराणि प्रसुवते, कस्तर्ह्येषां हानोपायो येन ते पुनः प्रत्ययान्तराणि न प्रसुवीरन् ? तत्राह—

**"हानमेषां क्लेशवदुक्तम्"** ॥ २८ ॥

**एषां**=व्युत्थानसंस्काराणां **हानं**=निवृत्तिः **क्लेशवत्**=क्लेशहानवद् **उक्तम्**=उक्ता वेदितव्येत्यर्थः ।

येनोपायेन हि क्रियायोगतनूकृताः क्लेशाः दग्धीभवन्ति, तेनैव व्युत्थानसंस्काराः अपि दग्धीभावमधिगच्छन्ति, न तेषां हानायोपायान्तरं मृग्यमिति भावः ॥ २८ ॥

ननु क्लेशानां हानं कथं भवति? तत्राह—

"**प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेक-ख्यातेर्धर्ममेघः समाधिः**" ॥ २९ ॥

**प्रसङ्ख्यानेऽपि**=प्रसंख्यानं विवेकख्यातिः, तत्रापि-दृष्टानुश्रविकेष्विव सर्वभावाधिष्ठातृत्वादिके तत्फलेऽप्य**कुसीदस्य**=कुत्सितेषु प्राकृतभावेषु सीदतीति कुसीदो रागः, स न विद्यते यस्य स तथा, तस्य विरक्तस्याभ्यस्यतः **सर्वथा**=सर्वप्रकारेण निरन्तरमिति यावद् **विवेकख्यातेः**=विवेकख्यात्युदयाद् **धर्ममेघः**=कैवल्यफलकं क्लेशकर्मादीनां निःशेषेणोन्मूलकमशुक्लाकृष्णं धर्मं मेहति सिञ्चति वर्षतीति धर्ममेघो नामतः **समाधिः**=योगो भवतीत्यर्थः ।

यदाऽयं विवेकज्ञानादपि न किञ्चित्फलं प्रार्थयते, प्रत्युत तत्रापि क्लिश्नाति परिणामित्वादिदोषदर्शनेन विरक्तः, तदाऽस्याभ्यासपाटवेन व्युत्थानप्रत्ययानुत्थानान्निरन्तरविवेकख्यातेर्भवति ज्ञानपरिपकावस्थात्मको धर्ममेघः समाधिरिति भावः ।

**तत्र** संप्रज्ञासमाधेः फलं प्रसंख्यानं, तस्य परा काष्ठा धर्ममेघः समाधिः, यत्संस्कारैर्व्युत्थानसंस्काराः सर्वथा निरुद्धा भवन्ति। तत्पराकाष्ठा च ज्ञानप्रसादाख्यं परवैराग्यं, यदुदयात्प्रसंख्यानमपि निरुणद्धि, निर्बीजयोगं चाभिनिर्हरतीति विवेकः ॥ २९ ॥

**ननु** सर्वथा विवेकख्यातेर्भवतु धर्ममेघः समाधिः, क्लेशानां निवृत्तौ किमायातं ? **तत्राह—**

**"ततः क्लेशकर्मनिवृत्तिः"** ॥ ३० ॥

**ततः**=प्रसङ्ख्यानपरिपाकरूपादुदिताद् धर्ममेघसमाधेः **क्लेशकर्मनिवृत्तिः**=सवासनानामविद्यादिक्लेशानां तन्मूलानां च शुक्लाशुक्लादिकर्मणां **निवृत्तिः**=हानं भवतीत्यर्थः।

**अस्यामेवावस्थायां** क्लेशकर्माशयानामभावादविप्लवविवेकख्यातिर्विद्वान् जीवन्नेव मुक्तो भवतीति बोध्यम् ॥ ३० ॥

**ननु** क्लेशकर्मनिवृत्तौ पुनः किं भवति ? **तत्राह—**

चित्त-सत्त्वस्य **"तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्"** ॥ ३१ ॥

**तदा**=क्लेशकर्मनिवृत्त्यनन्तरकाले **सर्वावरणमलापेतस्य**=आव्रियते चित्तसत्त्वमेभिरित्यावरणानि सवासनानि क्लेशकर्माणि,

तान्येव मलाः रजस्तमोमयत्वात्, सर्वे च ते आवरणमलाश्चेति सर्वावरणमलाः, तेभ्योऽपेतस्य विरहितस्य **ज्ञानस्य**=ज्ञायतेऽनेनेति व्युत्पत्त्या चित्तसत्त्वस्या**नन्त्यात्**=प्रकाशानन्त्या**ज्ज्ञेयं**=चेतनाचेतनात्मकं चैत्य**मल्पं**=परिच्छिन्नं भवतीत्यर्थः ।

चित्तसत्त्वं हि प्रकाशमयत्वात्स्वभावत एव वस्तुमात्रप्रकाशनक्षमं, तथापि रजस्तमोमयैः क्लेशकर्माशयैरावरणमलैर्घनपटलेव चन्द्रवदाच्छादितं किञ्चिदेव प्रकाशयति न सर्वम् । यदा च धर्ममेघसमाधौ पुनः सर्वैरावरणमलैरपगतमलं भवति, तदा शरदि घनपटलेन मुक्तस्य चन्द्रमसः परितः प्रद्योतमानस्य प्रकाशानन्त्याद् यथा प्रकाश्याः घटपटादयोऽल्पाः भवन्ति, तथैवापगतरजस्तमसश्चित्तसत्त्वस्यास्य भवति प्रकाश्यमल्पम् । न तत्र किञ्चिन्नाम विद्यते वस्तु, यन्न प्रकाशयेत् । वस्त्वन्तराभावादेव न प्रकाशयति, नतु प्रकाशाभावादिति भावः ।

इयमेव धर्ममेघस्य समाधेः परा काष्ठा संज्ञातो ज्ञानप्रसादमात्रम् । अनेनैव करतलीकृतामलकवत्पुरुषं निर्दोषमपरोक्षीकुर्वत्प्रकृति तद्विकारेषु चाविशुद्धिविनाशादिदोषान् साक्षात्पश्यच्चित्तमलं सम्पद्यते न पुनराकांक्षति किञ्चित् । अतएव योगिनो ज्ञानप्रसादमेव परं वैराग्यमाहुः । इदमेव च व्युत्थानसमाधिसंस्कारान् समूलकाषं, कषति, चित्तं च निर्बीजयोगे संयोजयतीति द्रष्टव्यम् ॥ ३१ ॥

**ननु** भवतु धर्ममेघसमाधिना क्लेशकर्मनिवृत्त्या ज्ञानानन्त्याज्ज्ञेयमल्पं, गुणानां परिणामक्रमसमाप्तिस्तु न जाता, येनैनं योगिनं प्रति पुनर्देहारम्भो न भवेत् । तत्राह—

**" ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् " ॥ ३२ ॥**

**ततः**=तस्माद् धर्ममेघस्योदयात् क्लेशकर्मनिवृत्त्या ज्ञानानन्त्यात्मके ज्ञानप्रसादे सति **कृतार्थानां**=हेतुगर्भविशेषणमिदं, कृतभोगापवर्गाणां **गुणानां**=प्रकृतिभूतानां सत्त्वरजस्तमसां **परिणामक्रमसमाप्तिः**=देहेन्द्रियादिकार्यारम्भकस्य परिणामक्रमस्य समाप्तिरवसानं भवतीत्यर्थः ।

तावद्धि गुणानां परिणामक्रमो न समाप्यते, यावदमी पुरुषस्य भोगापवर्गौ निर्हृत्य कृतार्थाः न भवन्ति । धर्ममेघोत्पादनमेव चैतेषां भोगापवर्गनिर्हरणम् । अतो यं पुरुषं प्रति धर्ममेघमुत्पाद्य कृतार्थाः गुणाः, न पुनस्तं प्रति देहेन्द्रियादिकमारभन्ते । यतोऽधुना कृतभोगापवर्गत्वादेते परिसमाप्तपरिणामक्रमा इति भावः ३२॥

**ननु** कोऽयमेषां गुणानां परिणामस्य क्रमः ? तत्राह—

**" क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः " ॥३३॥**

**परिणामापरान्तनिर्ग्राह्यः**=पूर्वधर्मापाये धर्मान्तरोत्पत्तिः

परिणामः, तस्य योऽपरान्तो विरामः, तेन निर्ग्राह्यः अनुमेयो यः **क्षणप्रतियोगी**=क्षणशब्देनात्र क्षणमात्रवर्ती क्षणिको भावो गृह्यते, परिपाटीयं तन्त्रकृतां यत्ते क्षणमात्रवर्त्तिनं क्षणिकं क्षणमाहुरिति, स एव प्रतियोगी प्रतिसंबन्धी निरूपको यस्य, स तथा तदव्यवहितधाराश्रयस्तत्परिणामपौर्वापर्यात्मकः,स **क्रमः**=गुणपरिणामक्रम इत्यर्थः ।

धर्मलक्षणावस्थाभेदात्त्रिविधस्तावत्परिणामः। तत्र धर्मलक्षणपरिणामेषु वर्तमानः क्रमः कथञ्चित्प्रत्यक्षोऽप्यवस्थापरिणामस्य क्रमो न कथमपि प्रत्यक्षायते । स एव चैको मुख्यः परिणामः । धर्मलक्षणपरिणामयोरपि तत्रैवान्तर्भावात् । यत्किञ्चिद्भेदेन चाचार्यैस्त्रित्वाभिधानात्, **"धर्मिणोऽपि धर्मान्तरमवस्था, धर्मान्तरस्यापि लक्षणान्तरमवस्थेत्येक एव द्रव्यपरिणामो भेदेनोपदर्शितः"** इति भाष्योक्तेः। अतएव चैतत्क्रमसामान्यलक्षणं संगच्छते । न च तत्र क्रम एव नास्तीति वक्तुं शक्यम् । परिणामस्य क्रमसमव्याप्तत्वात् । नहि नितान्तसुरक्षिते नूतनतमे वस्त्रादौ चिरेणानुभूयमाना पुराणता युगपज्जातेति सम्भवति, किन्तु पूर्वं सूक्ष्मतमा जाता, पश्चात्सूक्ष्मतरा, तत्पश्चात्सूक्ष्मा, तदनु स्थूला, ततः स्थूलतरा ततश्च स्थूलतमेति । तत्र योऽयं दृष्टिपथमारोहता चरमपुराणतालक्षणेन परिणामस्यापरान्तेनानुमीयमानः पुराणतायाः

सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरत्वादीनां पूर्वापरीभावः, स क्रम इति भावः ।

**क्षणप्रतियोगी**=क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावद् यो धर्माणां पूर्वापरीभावः परिणामापरान्तनिर्ग्राह्यः स क्रम इति वार्तिककृतः ।

**तत्र** क्रम इति लक्ष्यं, क्षणप्रतियोगीति लक्षणं, परिणामापरान्तनिर्ग्राह्य इति तत्साधकप्रमाणोपन्यास इति विवेकः ॥३३॥

**ननु** गुणानां परिणामक्रमसमाप्तौ यत्पुरुषस्य कैवल्यं भवति, तस्य किं लक्षणं ? तत्राह—

**"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" ॥३४॥**

इति शब्दः शास्त्रपरिसमाप्तिमाह । **पुरुषार्थशून्यानां**=कृतभोगापवर्गतया पुरुषार्थरहितानां **गुणानां**=कार्य्यकारणात्मकानां बुद्ध्यादिगुणानां **प्रतिप्रसवः** = व्युत्थानसमाधिनिरोधसंस्काराः मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता महति, महत्तत्वमलिङ्गे प्रधान इति प्रातिलोम्येन स्वकारणे प्रधाने प्रलयः, **स्वरूपप्रतिष्ठा**=निवृत्तबुद्ध्युपरागत्वात्स्वरूपे प्रकर्षेण तिष्ठतीति स्वरूपप्रतिष्ठा **चितिशक्तिः**=पुरुषनाम्नी चिच्छक्तिः, चिच्छक्तेः स्वरूपप्रतिष्ठा वा **कैवल्यं**=केवलीभावो मोक्ष इति यावदित्यर्थः ।

यदा हि कार्य्यकारणात्मकाः गुणाः पुरुषस्य भोगापवर्गौ

कुर्वते, तदा कृतकृत्यत्वान्निराकुलं स्वकारणे प्रधाने प्रतिप्रसुवते। तदनेन लिङ्गशरीरभङ्गाख्यं कैवल्यं प्रधानस्योक्तं भवति। यतस्त दारम्भणादतिचिरात्प्रवृत्तान्मुक्तं प्रधानम्। लिङ्गशरीरभङ्गे च वृत्तिसारूप्याभावात् स्वरूपावस्थितः पुमान् स्वात्मना पश्यन् ब्रह्म निरन्तरं तत्स्वरूपानन्दमुपभुङ्क्ते। तदनेन स्वरूपावस्थानेन ब्रह्मानन्दावाप्तिलक्षणं कैवल्यं पुरुषस्योक्तं भवति। यतः पुरुष एव संसारदुःखाद् विनिर्मुक्तो ब्रह्मानन्दोपभोक्तेति। तत्र च पूर्वस्य सिद्धौ सत्यां तदन्यसिद्धेरवश्यंभावादुक्तं पुरुषार्थशून्यानां गुणानां प्रतिप्रसवश्चिच्छक्तिपुरुषस्य स्वरूपप्रतिष्ठा वा कैवल्यमिति भावः ॥ ३४ ॥

**कैवल्यार्हं मनस्तस्माद्विवेको द्रष्टृदृश्ययोः।**
**धर्ममेघोऽथ कैवल्यं पादेऽस्मिन् प्रत्यपाद्यत ॥ १ ॥**
**श्रीपतञ्जलिनाऽकारि वैदिकी योगकृप्रपा।**
**मया हरिप्रसादेन वृत्त्या सम्यक् परिष्कृता ॥ २ ॥**
**यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला।**
**महीभावेन वन्द्योऽसौ विद्यादातेश्वरस्सदा ॥ ३ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगव-
त्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां योगसूत्र-
वैदिकवृत्तौ कैवल्यपादश्चतुर्थः ॥ ४ ॥
समाप्तञ्चैतद् दर्शनम् ॥

# अथ शुद्धाशुद्धम् ।



| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ८ | अनुभूतिविषया | अनुभूतविषया |
| १३२ | ७ | य तद्रहितं चित्तं | तद्रहितं चित्तं |

---



# अथ वैदिकमुनिविरचितग्रन्थाः ।

| | |
|---|---|
| वेदान्तसूत्रवैदिक ( भाष्य ) वृत्तिः .... .... | ५।) |
| न्यायसूत्रवैदिक ( भाष्य ) वृत्तिः .... .... | २॥=) |
| वैशेषिकसूत्रवैदिक ( भाष्य ) वृत्तिः .... .... | १॥=) |
| सांख्यसूत्रवैदिकवृत्तिः .... .... .... | १) |
| योगसूत्रवैदिकवृत्तिः .... .... .... | ॥) |
| सामवेद—भाषानुवादसहित .... .... | ॥) |
| वेदसर्वस्व—प्रथम भाग .... .... .... | १) |
| मनसापरिक्रमामन्त्रार्थः .... .... .... | =) |

प्राप्तिस्थानम्

पण्डित दिवाकर शुक्ल—मुख्य संरक्षक,
गुरुकुल वृन्दावन—मथुरा.

लाला खुशीराम जी पेन्शनर—देहरादून.

पण्डित देवदत्त शर्म्मा—शाह आल्मी दरवाजा लाहौर.